# चन्दमामा

सम्पुटः - १५ एप्रिल् - २००० सञ्चिका - ५



## अन्तरङ्गम्

**कथाः**



Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai - 600 026. Editor : Viswam

## एतस्य अङ्कस्य विशेषाः

तिस्रः यक्षकन्यकाः त्रीणि वराणि च





प्रतिभायाः आश्रयः (वेतालकथा)

वास्तविकता-स्वप्नयोः भेदः



अभिव्यज्यताम् ! पुरस्कारः प्राप्यताम् !!





# चन्दमामा

**फेब्रवरी - २०००**



## उत्तराणि

१. राज्ञी पद्मिनी, मेवाडराजः रतनसिंहः च । सः आक्रामकः आसीत् अलावुदीन् खिल्जी । एषा घटना १३०२ तमे वर्षे घटिता ।

२. अ. पितृवंशसम्बन्धी भ्राता ।
आ. कंसः जरासन्धस्य जामाता ।
इ. एतौ वैमात्रेयौ ।
ई. कृपाचार्यः अश्वत्थाम्नः मातुलः ।
उ. एतौ वैमात्रेयौ ।

३. १. विष्णुशर्मणः पञ्चतन्त्रम् ।
२. बृहत्कथा । रचयिता गुणाढ्यः । एतदाधारेण सोमदेवेन कथासरित्सागरः रचितः ।
३. बुद्धस्य जातककथासङ्ग्रहः ।
४. भगवद्गीता ।
५. वेदकालः, उपनिषत्कालः, पुराणकालः, इतिहासकालः चेति ।

# सर्जनात्मिकाः स्पर्धाः

**चन्दमामा**
**वाचकान् निमन्त्रयति**
अधोनिर्दिष्टेषु क्षेत्रेषु कल्पनां विस्तारयितुं सर्जनात्मकसाहित्यं स्त्रष्टुं च....





## छायाचित्रस्य
### अनुशीर्षिकास्पर्धा

**१. चित्रशीर्षिकास्पर्धायाः पृष्ठार्थम् -**
केनचित् क्रमेण परस्परं सम्बद्धं चित्रयुगलम् प्रेषयितुम् अर्हन्ति उदीयमानाः चित्रग्राहकाः । चित्रप्रेषणसमये चित्रकारः परस्परसम्बन्धस्पष्टतार्थं स्वस्य आशयम् अवश्यं लिखित्वा प्रेषयेत् ।

**चिताय चित्रयुगलाय**
**रू. ५००/- दीयन्ते पारितोषिकरूपेण**
स्पर्धार्थं चित्रयुगलं यदाकदाचिदपि प्रेषयितुं शक्यम् ।



२. अधोलिखितां लोकोक्तिं सूक्तिं वा अधिकृत्य स्वकीयम् अनुभवं, लघुकथां (नूतनां प्राचीनां वा) प्रेषयितुम् अर्हन्ति भवन्तः । एतदत्र स्मर्तव्यं यत् लोकोक्तिः सूक्तिः वा यां मूलकल्पनाम् आधारीकृत्य प्रवृत्ता, सा न अङ्गीक्रियते । अतः भवदीया कथा ततः अन्या स्यात् ।

एतन्मासीयस्पर्धार्थं लोकोक्तिः -

**दूरतः पर्वतो रम्यः**

**चितायै रचनायै रू. ५००/- दीयन्ते पारितोषिकत्वेन**

*रचनां प्रेषयितुम् अन्तिमदिनाङ्कः -*

३०, एप्रिल् - २०००

पुरस्कृता रचना जून् - २००० सञ्चिकायां प्रकाशयिष्यते ।



संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

# मातृभाषायाः महत्त्वम्

प्रतिवर्षं फेब्रवरीमासस्य एकविंशतितमः दिनाङ्कः मातृभाषादिनत्वेन आचरणीयः इति युनेस्कोसंस्थया (united nations educational, scientific, and caltural organisation) उद्घोषितम् अस्ति ।१९५२ तमे वर्षे तस्मिन् एव दिनाङ्के ढाकानगरे तत्परिसरे च निवसन्तः जनाः बलात् उर्दूभाषायाः आरोपणं विरुध्य आत्मसमर्पणं कृतवन्तः । तत्काले ढाका पूर्वबङ्गालराज्यस्य राजधानी आसीत् , पाकिस्थानस्य अङ्गं सत् तत् पुर्वपाकिस्थानत्वेन परिगण्यते स्म च । तत्कालीनः पाकिस्थानमुख्यमन्त्री निझामुद्दीनः उद्घोषितवान् आसीत् यत् उर्दूभाषा एव राष्ट्रभाषा भवेत्, बङ्गालीभाषायाः राज्यभाषात्वं न भवेत् इति । एतस्य परिणामतः सा घटना प्रवृत्ता ।

योग्यमानसविकासार्थं मातृभाषायाः उत्कृष्टं ज्ञानम् अत्यावश्यकम् इति शिक्षणतज्ज्ञाः अभिप्रयन्ति । अतः मातृभाषा कदापि न उपेक्षणीया । मातृभाषायाः योग्यं शिक्षणं बालकाः यथा प्राप्नुयुः तथा पोषकैः विशेषावधानं दातव्यम् ।

युनेस्को वदति - 'अस्माभिः एवम् एव मातृभाषाः यदि उपेक्ष्येरन् तर्हि अग्रिमे दशकद्वयाभ्यन्तरे एव षट्सहस्राधिकाः (६०००) भाषाः विलुप्ताः भवेयुः' इति । भाषावैविध्यस्य नाशः मानवताम् अपि आघातयति निश्चयेन । अतः वयं सर्वे मातृभाषाः रक्षाम, मानवतां सम्पोषयाम ।

# वार्ताविशेषाः

## केनडादेशेन दर्शितः मार्गः

एकस्याः धूमवर्तिकायाः सेवनं जीवनस्य ११ निमेषान् ह्रासयति इत्येतां वार्तां वयं श्रावितवन्तः आस्म खलु इतः पूर्वम् ? केनडादेशेन धूमवर्तिकानिर्मातारः सूचिताः सन्ति यत् धूमवर्तिकाकोषस्य उपरि अर्बुद-ग्रस्तश्वासकोषस्य, रोगग्रस्तमुखस्य च चित्रं वर्णैः मुद्रणीयम् इति । अन्ये अपि देशाः एतादृशनियमान् कुर्युः अपि । किम् अस्मद्देशे तादृशं चित्रमयस्मारणं प्रतीक्षमाणैः अस्माभिः



तूष्णीं स्थातव्यम् ? धूमव्यसनिनः सुहृदः बान्धवाः च कान्तासम्मिततया कुतो वा न बोधनीयाः ?

## अधिकारिणा दर्शितः व्यवहारः

अन्यदिनेषु इव तस्मिन् अपि दिने सूर्यः उदितः मध्यप्रदेशस्य राजधान्यां भोपालनगरे स्थिते जयप्रकाशचिकित्सालये । सूर्यः वैद्यान्, रोगिणः, भवनानि, वाहनानि च यथा किरणैः अस्पृशत् तथैव अस्पृशत् अवकरराशिम् अपि ।

किन्तु तौ कौ - यौ च चिकित्सालय-परिसरे सम्मार्जननिरतौ स्तः ! सामान्यदर्शनात् एव ज्ञायते यत् तौ सम्मार्जकौ न इति । तयोः एका महिला अपि !

तौ स्तः - ज्येष्ठः ऐ.ए.एस्.अधिकारी, प्रबन्धप्रशिक्षणसंस्थायाः निदेशकः श्री पद्मवीरसिंहः, तत्पत्नी च । तयोः कृत्यं दृष्ट्वा प्रशिक्षणार्थिनः सर्वे तयोः साहाय्यार्थं धावितवन्तः । वैद्याः अपि तथैव कृतवन्तः । एतस्य परिणामतः चिकित्सालयपरिसरस्य अस्वच्छता घण्टाभ्यन्तरे अदृश्यतां गता, या च दीर्घकालतः अनुवर्तमाना आसीत् ।

अन्यसाहाय्यम् अनपेक्षमाणाः वयम् एव स्वशक्त्या यत् साधयितुं शक्नुमः तदेव वस्तुतः श्रेष्ठम् ! एतादृशं कार्यं कर्तुं



राष्ट्रभक्तिः, समाजे आस्था, मानवतायाम् अभिमानः च आवश्यकाः । सिंहवर्येण एते एव गुणाः व्यवहारेण दर्शिताः ।

## महादूरसंवेदियन्त्रम्

महाविस्फोटस्य (big bang) कारणतः एतत् जगत् सृष्टम् अभवत् इति तु आधुनिकविज्ञानिनां वादः । महाविस्फोटः ग्रहनक्षत्रादिषु उत्पाद्यमानान् कम्पनादीन्



अवलम्बते । एवं दूरस्थे एकस्मिन् नक्षत्रे जातम् एकं कम्पनम् अनेकवर्षाणाम् अनन्तरं भूमिं प्राप्नोति । तादृशं कम्पनं ग्रहीतुम् अमेरिकादेशीयेन राष्ट्रियप्रयोगालयेन एकं महादूरसंवेदियन्त्रं सज्जीकृतम् अस्ति । एतत् सूक्ष्मातिसूक्ष्मं कम्पनम् अपि अभिज्ञातुम् अङ्कयितुं च समर्थम् ।

## A PEEP INTO OUR READERS' MIND

This is the FIFTH issue in your hands since *Chandamama* was re-launched in December 1999. We have no doubt you have enjoyed reading the previous four issues. And you might have noticed that while the magazine has retained the flavour for which it is famous for the last 50+ years, it has undergone a lot of changes in content and upped its layout and design and illustrations – not to speak of the better quality paper. We have tried to make each issue a shade better than the previous one. Of course, the several letters that we received in the last hundred days have proved that the improvements have not gone unnoticed. We do not wish to rest on our oars, but feel that more improvements have to be guided by what our readers want to see included in the magazine, also what they sincerely feel could be dropped for alternative items. Would you not open up your minds for our sake? We would like each one of you to answer the questions given below, cut out the sheet where it is indicated, and mail it to us as quickly as possible. You will see, we have made the exercise very simple. In most cases, you have only to put a tick mark (✓) in the appropriate squares. Here we go!

I. Issues come to me ☐ through subscription
I buy the issues ☐ from the newspaper boy
I buy the issues ☐ from a news stand
I borrow the issues ☐ from a friend/library

II. I also read regularly/occasionally

☐ Comics ☐ Story Books ☐ Other children's magazines..........................................(Identify by name)

III. I read the magazine in English / Telugu / Tamil / Malayalam / Kannada / Hindi / Marathi / Gujarati / Bengali / Assamese/ Oriya / Sanskrit.
*(Underline the language of your choice)*

IV. In the last four months, I read

☐ 4 issues ☐ 3 issues
☐ 2 issues ☐ 1 issue



Cutout on the dotted line

V. I would rate the features as follows :

☐ Serial story ☐ Mythology ☐ Vikram-Vetala tale
☐ Tales from many lands ☐ Other stories
☐ Unsolved mysteries ☐ Saga of India ☐ Biography
☐ Newsflash ☐ India, Then and Now
☐ Discovery of India Quiz ☐ Puzzles / contests
☐ The World Today ☐ Towards Better English
☐ Let us know ☐ Story of Rivers

*(Show your preferences by serially numbering the squares 1 to 16)*

VI. I would like *Chandamama* to include the following features :
*(in the order of priority)*

i.................................... iv....................................
ii. .................................... v....................................
iii.................................... vi....................................

VII. I would like the cover picture to depict :

☐ a sequence from the adventure serial ☐ a scene from mythology
☐ an action from any other story.

VIII. I feel the price of Rs. 10 for a copy is ☐ too high ☐ affordable
☐ may be reduced *(by using cheaper paper)*

IX. i) I am a subscriber ii) I want to become a subscriber

Name.................................................... Age ................
Class ...............School ....................................................
Address ....................................................................
....................................................................................
.............................. PIN......................... State...................

iii) I go to school ☐ by my bike ☐ by school bus ☐ by city bus
☐ by my parent's vehicle

iv) I get pocket money ☐ less than Rs. 100 ☐ more than Rs. 100

*Parent's Signature* *Signature*

वेताल-कथा

# प्रतिभायाः आश्रयः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षस्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवतः सङ्कल्पशक्तिः साहसप्रवृत्तिः च अपूर्वा एव । कठिनातिकठिनं कार्यं कर्तुम् अपेक्षिता अदम्या शक्तिः, अनन्तं लक्ष्यं साधयितुम् अपेक्षिताः धैर्यसाहसादयः च भवतः सन्ति । भवादृशः जनः विरलः एव लोके । एतादृशः अपि भवान् यं मार्गम् अनुसरन् अस्ति तद्विषये अस्ति मम विप्रतिपत्तिः । यदर्थं भवान् एवम् अर्धरात्रे घोरे श्मशानमार्गे एतावन्तं परिश्रमं कुर्वन् अस्ति तस्य लक्ष्यस्य



एव यदि अस्पष्टता, तर्हि प्रयत्नः कथं वा सफलः भवेत् ? सर्वप्रयत्नस्य अनन्तरम् अन्ते फलम् अप्राप्य विवेकशर्मा इव भवान् अपि निराशः न भवेत् खलु ? भवतः विवेकस्य जागरणार्थं मार्गायासपरिहारार्थं च विवेक-शर्मणः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

साहित्यपुरे विवेकशर्मा नाम कश्चन कविः पूर्वं निवसति स्म । उत्तमानि काव्यानि रचयति स्म सः । वस्तुतः सः महाकविः एव । किन्तु महाकवेः यादृशी प्रसिद्धिः कीर्तिः च भवेत् तादृशी तस्य न आसीत् । सः तादृशीं प्रसिद्धिं न इच्छति स्म अपि । किन्तु सः - 'मम काव्यम् अधिकाधिकजनाः पठेयुः, ततः प्रेरणां प्राप्य ते समाजकार्ये देशसेवायां च निरताः भवेयुः' इति तु इच्छति स्म । किन्तु वस्तुस्थितिः तादृशी न आसीत् । सामान्यजनान् न प्राप्नुवन्ति स्म तदीयानि काव्यानि ।

''प्रचारः अस्ति चेदेव काव्यं सामान्यान् जनान् प्राप्नुयात् । प्रचारार्थं कोऽपि धनिकः आदौ आश्रयणीयः । धनिकस्य साहाय्येन राष्ट्रस्तरीयम् एकं साहित्यसम्मेलनम् आयोजनीयम् । तत्र भवतः काव्यानां पठनं भवेत् । विमर्शकाः तस्य विमर्शं कुर्युः । पत्रिकासु भवत्काव्यस्य विमर्शः परिचयः च प्रसारितः स्यात् । तदा सामान्याः जनाः भवदीयकाव्येषु आसक्तिं प्रदर्शयेयुः'' इति एकः हितचिन्तकः विवेकशर्माणं सूचितवान् ।

एतत् अनङ्गीकुर्वन् विवेकशर्मा उक्तवान् - ''गुणोत्कर्षद्वारा एव काव्यस्य प्रचारः भवेत् इति मम इच्छा । भवता सूचितः मार्गः न प्रशस्तः । यथा पुष्पस्य सौगन्ध्यं प्रचारं विना अपि जनैः ज्ञायते, सूर्यस्य किरणाः यथा सर्वान् स्पृशन्ति तथा भवेत् मम काव्यस्य ख्यातिः'' इति ।

अत्रान्तरे राजा प्रगल्भवर्मा उद्घोषितवान् - ''अहम् एकं महाकाव्यम् रचयितुम् इच्छामि अन्यस्य महाकवेः साहाय्येन । यः प्रतिभा-शाली महाकविः काव्यरचनाकार्ये मम साहाय्यं करिष्यति तस्मै पारितोषिकाणि दास्यन्ते, राष्ट्रस्तरे सम्मानः करिष्यते च'' इति ।

एताम् उद्घोषणं श्रुत्वा विवेकशर्मणः मित्रम् अवदत् - ''एषः सुवर्णावकाशः भवते ।

विनाश्रयाः न शोभन्ते पण्डिताः वनिताः लताः इति भवता अपि ज्ञायते एव । प्राप्तः अयम् अवसरः न परित्यक्तव्यः । अचिरात् एव राजधानीं गत्वा महाराजः दृश्यताम्'' इति ।

मित्राणाम् अनुरोधं पुरस्कुर्वन् विवेकशर्मा राजधानीं गत्वा महाराजेन मिलितवान् । राजा स्वरचिताः काश्चन कृतीः विवेकशर्मणे दत्त्वा तदीयाः काश्चन कृतीः स्वयं स्वीकृत्य - ''मम कृतीनाम् अध्ययनं कृत्वा भवान् स्वाभिप्रायं प्रकटयतु । अहम् अपि भवतः कृतीः अधीत्य मदीयम् अभिप्रायं कथयिष्यामि । सप्ताहानन्तरम् आवाम् अभिप्रायविनिमयं कृत्वा अग्रिमपदानि निश्चेष्यामः'' इति सूचितवान् ।



अतिथिगृहे विवेकशर्मणः वासार्थं व्यवस्था उपकल्पिता । तस्मिन् भवने अन्ये अपि कवयः इतः पूर्वम् आगताः वसन्ति स्म । विवेकशर्मा राज्ञः कृतीः एकदिनाभ्यन्तरे एव पठितवान् । अवशिष्टेषु दिनेषु अन्यकविभिः वार्तालापं कुर्वन् तेषां गुणावगुणं परिशीलयितुम् उद्युक्तः अभवत् सः ।

केषाञ्चित् युवकवीनां काव्यानि परिशील्य सः स्वाभिप्रायं प्रकटितवान् - ''भवतां काव्यस्य वस्तु, विषयः, विस्तारः, ज्ञानं च उत्तमम् अस्ति । किन्तु काव्यशैली दुर्बला दृश्यते । अभिव्यञ्जनकौशलं पूर्णपरिष्कृतं न दृश्यते । पदपाकः दुर्बलः । आत्मभूतस्य विषयस्य अनुगुणं निरूपणशैलीरूपं कलेवरम् अपि उत्कृष्टं भवति चेदेव काव्यस्य प्राशस्त्यं वर्धते । एतदर्थं योग्यस्य गुरोः मार्गदर्शने कठिनपरिश्रमः करणीयः भवेत्'' इति ।

विवेकशर्मणः अभिप्रायः यद्यपि प्रियः न आसीत्, तथापि तस्य श्रवणात् ते कवयः न असन्तुष्टाः । यतः स च वस्तुनिष्ठः पक्षपातरहितः च आसीत् । अतः ते तृप्तिं प्राप्तवन्तः । कश्चन कविः अवदत् - ''भवता यादृशाः कविगुणाः सूचिताः ते सर्वे अस्मद्गुरौ सन्ति । किन्तु सः अत्र उपस्थातुं न इष्टवान् । अस्मान् प्रेषितवान् अस्ति सः'' इति ।

''यदि भवतां गुरुवर्यः अत्र उपस्थितः भवेत् तर्हि वरम् अभविष्यत् । राजा प्रतिभावतः महाकवेः सहयोगेन काव्यं रचयितुम् इच्छति । अतः भवतां गुरुदेवस्य सहयोगः अत्र निश्चयेन लाभकरः अभविष्यत्'' इति उक्तवान् विवेकशर्मा ।



तदा अपरः कविः उक्तवान् – "महाकवेः सहयोगः इष्यते इति राज्ञा घोषितम् इति तु सत्यम् । किन्तु वस्तुस्थितिः अन्या एव अस्ति। अतः एव अस्मद्गुरुवर्येण न आगतम् । राजास्थानस्य विषयं भवान् पूर्णतः न जानाति इति मन्ये" इति ।

"राजास्थानस्य किं तत् वैशिष्ट्यम् ?" – इति कुतूहलेन पृष्टवान् विवेकशर्मा । किन्तु कोऽपि विस्तरेण वक्तुं सिद्धः न आसीत् । महान् अनुरोधः यदा कृतः तदा कश्चित् कविः सर्वं विवृतवान् । ततः विवेकशर्मणा ज्ञातं तु एतावत् –

राजा प्रगल्भवर्मा न श्रेष्ठः कविः । किन्तु महाकविः इति ख्यातिः प्राप्तव्या इति तस्य प्रबला इच्छा अस्ति ।

आ छात्रजीवनात् सः काव्यरचनायां विशेषपरिश्रमं कुर्वन् अस्ति । किन्तु कवि-प्रतिभा तस्मिन् अल्पा । अतः कठोरपरिश्रमस्य अनन्तरं महतः समयस्य व्ययस्य अनन्तरं च अल्पा दक्षता प्राप्ता तेन । सः युवराजः आसीत् इत्यतः तस्य अल्प-दक्षताम् एव सर्वे बहुधा श्लाघितवन्तः । अतः सः गच्छता कालेन आत्मानम् असाधारणनिष्णातं मतवान् । किन्तु कवि-गोष्ठीषु कासुचित् यदा भागः गृहीतः तदा तेन स्व-स्वरूपज्ञानं प्राप्तम् । आत्महीनता-भावश्च तस्मिन् उत्पन्नः । काव्यरचनायां निरुत्साहः चिन्ता च उत्पन्नः ।

यदा सः राजा जातः तदा महामन्त्री तस्य चिन्तां निवारयितुम् एकं मार्गं सूचितवान् – "इदानीं राज्ये शान्तिसुभिक्षादयः सन्ति । महासमस्याः न सन्ति । अतः महाप्रतिभा-शालिनाम् अत्यावश्यकता तु नास्ति । तदर्थं विशिष्टप्रतिभावतां भवतः आस्थाने उद्योगः न दातव्यः । सामान्याः एव आस्थानपदेषु नियोजनीयाः । प्रतिदिनं तेषां दर्शनतः – 'अहम् एतेभ्यः श्रेष्ठः' इति भावना भवति उदेति, आत्मविश्वासश्च वर्धिष्यते । आत्महीनभावना समूलं विनश्यति । किन्तु देशकार्ये प्रतिभावताम् अपि आवश्यकता कदाचित् भवेत् एव । अतः प्रतिभावतां कृते आश्रयस्य दानार्थं संसत् काऽपि आरचनीया । तत्र ते वसेयुः । सुखसौविध्यादयः तत्र कल्पनीयाः । विशिष्टावसरे ते मार्गदर्शनं कर्तुम् अर्हन्ति । एवं तेषां प्रतिभायाः उपयोगः देशेन प्राप्यते । अधिकाराभावात् ते शासनस्य

नित्यकार्येषु हस्तक्षेपं कर्तुं न अर्हन्ति'' इति ।

महामन्त्रिणः आशयस्य अनुगुणं राज्ञा काचित् प्रतिभासंसद् आरचिता । तत्र कविकलाकारादीनां कृते योग्या वसति-व्यवस्था उपकल्पिता । विना परिश्रमं सुखेन आनन्देन च जीवन्तः कलाकारादयः निश्चिन्त-जीवनं यापयन्ति स्म । तेषां प्रतिभायाः उपयोगः सामान्यैः जनैः न प्राप्यते स्म । अतः सामान्याः जनाः तेषां विषये आदरवन्तः न आसन् । तेभ्यः उत्तमम् आश्रयं कल्पितवतः राज्ञः विषये तु जनानां विशेषादरः प्रवृद्धः ।

राजा एकं सामान्यं जनं मन्त्रिणं कृतवान् । तादृशम् एव अन्यं सेनापतिं कृतवान् च।''

एतत्सर्वं ज्ञात्वा विवेकशर्मा संसदि वसद्भिः विद्वद्भिः मिलितवान् । तेषां गभीरं ज्ञानम्, असदृशं पाण्डित्यं च दृष्ट्वा सः आश्चर्यचकितः । अन्योऽपि आश्चर्यजनकः विषयः तेन तत्र दृष्टः । तेषां सर्वेषां हस्ते तदियाः कृतयः आसन् । ते ताः कृतीः प्रशंसन्तः उक्तवन्तः यत् समीक्षार्थं राजा एताः प्रेषितवान् अस्ति इति । तासां रचयितारं प्रत्यक्षं दृष्ट्वा आश्चर्यम् आनन्दं च अनुभूतवन्तः ते ।

विवेकशर्मा तेषां पण्डितानां पाण्डित्यं प्रशंसन् पृष्टवान् - ''पाण्डित्यवन्तः अपि भवन्तः किमर्थम् एवं शरणालये बन्दिजनाः इव अज्ञातजीवनं यापयन्ति ? भवताम् उपस्थितिं जनाः न जानन्ति एव । भवतां प्रतिभायाः लाभः अपि तेषां कोऽपि जायमानः नास्ति । एवं किमर्थम् ?'' इति ।

तदा ते पण्डिताः उक्तवन्तः - ''वयं द्वित्रैः कारणैः अत्र वसन्तः स्मः । अत्र विद्वांसः, साहित्यकाराः, कलाकाराश्च एव निवसन्ति । अत्र वासतः तेषां विशेषसहवासः प्राप्यते । अन्यच्च, वयं प्रसिद्धिविषये विशेषासक्ताः न । अस्माकं मार्गदर्शनतः राजा प्रजाः च परोक्षतया लाभं प्राप्नुवन्ति एव । तस्मात् अस्माकं तृप्तिः अस्ति । अत्र सुखसौविध्यानि





सन्ति । परिश्रमस्य न काऽपि आवश्यकता । अतः समग्रं समयं काव्यादिपरिशीलने यापयितुम् अर्हामः वयम्'' इति ।

राज्ञः विषये एतत्सर्वं ज्ञात्वा अपि विवेकशर्मा पूर्वनिश्चितसमये राज्ञः आस्थानं गतवान् । तस्य कृतीनां विषये स्वाभिप्रायम् एवं प्रकाशितवान् - ''भवतः कृतिषु प्रयुक्ता भाषा उत्कृष्टा अस्ति । ललिता शैली दृश्यते । किन्तु भावानां परिपोषणं यथायोग्यं नास्ति । अतः भवतः कृतयः श्रेष्ठकाव्यपङ्क्तौ स्थातुम् अनर्हाः जाताः'' इति ।

विवेकशर्मणः स्पष्टोक्त्या राजा न खिन्नः । सः विवेकशर्मकृतीनां प्रशंसां कुर्वन् - ''भवान् प्रतिभावान् कविः । भवतः कृतयः उच्चास्तरीयाः इत्यत्र नास्ति सन्देहलेशोऽपि । अतः अस्माकं संसदि भवान् वासं यदि अङ्गीकुर्यात् तर्हि वयम् अनुगृहीताः स्याम'' इति उक्त्वा एकं रत्नहारं विवेकशर्मणे उपायनरूपेण दत्तवान् ।

विवेकशर्मा राज्ञः प्रस्तावं न अङ्गीकृतवान् । सः प्रतिभासंसदि वासं निराकृतवान् । अत्रान्तरे तेन ज्ञातम् आसीत् यत् केषाञ्चित् सामान्यकवीनां साहाय्येन काव्यरचनं करणीयम् इति राजा पूर्वम् एव निश्चितवान् अस्ति इति । सुखसौविध्यमये संसद्भवने विशेषप्रयोजनं विना स्थितिः तस्मै न अरोचत । अतः राज्ञः अनुज्ञां प्राप्य सः स्वग्रामं प्रतिगतवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! विवेकशर्मा हस्तगतं सुवर्णावसरम् अपि किमर्थं परित्यक्तवान् ? प्रतिभासंसदि वासः कृतः चेत् महाकवीनां महाजनानां च सहवासलाभः प्राप्तः अभविष्यत् । एतादृशम् उत्तमम् अवसरं परित्यक्तवान् विवेकशर्मा किं न अविवेकी ? किमर्थं वा तेन तथा कृतम् ? हितचिन्तकानाम् उपदेशः किमर्थं वा तेन निराकृतः ? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''विवेकशर्मा न केवलं महाकविः, अपि तु सः उदात्तचिन्तनयुक्तः श्रेष्ठलक्ष्य-साधकः च आसीत् । अल्पश्रमसाध्या सामान्यजनप्रियता प्राप्तव्या इति तस्य इच्छा न आसीत् । महाकवित्वेन ख्यातिः लब्धव्या



**एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।**
**वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ।।** **- चाणक्यनीतिः**

सुगन्धिपुष्पैः युक्तः एकोऽपि वृक्षः समग्रं वनम् एव यथा सुगन्धयुक्तं करोति तथा एकः सुपुत्रः समग्रं कुलं विभूषयति ।

इति महात्त्वाकाङ्क्षा अपि तस्य न आसीत् । राजाश्रयप्राप्तीच्छया स्वातन्त्र्यं परित्यक्तुं, भयकारणतः सत्यकथनं निराकर्तुं, सुकसौविध्यार्थं मिथ्याप्रशंसां प्राप्तुं च सः इच्छति स्म । प्रतिभासंसदि प्रतिभाशालिनः बहवः आसन् । किन्तु तेषां पुरतः उन्नतादर्शः कोऽपि न आसीत् । प्रतिभायाः उपयोगं कृत्वा महत् प्रयोजनं किमपि प्राप्तव्यम् इति चिन्तनं तेषां न आसीत् । राजाश्रये तिष्ठन्तः सुखसौविध्यमात्रप्राप्तौ आसक्ताः आसन् ते । राज्ञः अधमर्णतां गताः ते निर्भयम् अभिप्रायं वक्तुं सत्यांशं प्रकटयितुं वा न शक्नुवन्ति स्म । विवेकशर्मा तु धैर्येण राज्ञः कृतीनां स्पष्टविमर्शं कृतवान् । सत्याभिव्यक्तेः परिणामविषये अल्पाम् अपि चिन्तां न प्राप्तवान् सः । अतिथिगृहे निवसतां कवीनां द्वारा 'राजा मिथ्याप्रशंसां प्राप्तुम् एव प्रतिभासंसदि प्रतिभावताम् आश्रयं कल्पयति' इति तेन यदा ज्ञातं तदा सः अवगतवान् यत् मम प्रतिभायाः उचितः उपयोगः अत्र न भविष्यति इति । 'योग्यतायाः आधारेण एव मया जनप्रियता सम्पादनीया । मम काव्यं सामान्यजनानां जिह्वासु अपि नृत्येत् । मम काव्यं पठितवतां जीवनं परिष्कृतं भवेत् । जनेषु उदात्तजीवन-बीजारोपणम् एव काव्यस्य मुख्यं प्रयोजनम्' इति चिन्तनम् आसीत् विवेकशर्मणः । राजास्थाने आश्रयप्राप्तितः एतादृशचिन्तनस्य क्रियान्वयनं न अभविष्यत् । 'यदि राजास्थाने स्थीयते तर्हि चाटुकारिताम् अवलम्ब्य राज्ञः इच्छानिच्छानुगुणं व्यवहरता सुखं प्राप्येत, न तु तृप्तिः' इति निश्चित्य विवेकशर्मा राजाश्रयं निराकृतवान् । एवं कुर्वता तेन विवेकिता एव प्रदर्शिता, न तु अविवेकः'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षशाखाम् अवलम्बितवान् ।





# को वा दोषः ?

शिवपुरे कश्चन सण्डः आसीत्। सः शिवदेवालयीयः । सः स्थूलकायः दृप्तः च आसीत् । आक्रमणे तस्य विशेषोत्साहः । अद्यावधि कस्यापि हानिः तेन न कल्पिता आसीत्, तथापि सर्वे तस्मात् भीताः भवन्ति स्म । यदा सः दूरे दृश्यते तदा एव पलायनं कुर्वन्ति स्म ते । तेषां पलायनं दृष्ट्वा सण्डः उत्साहेन अनुधावति स्म । धावने अशक्ताः वृद्धाः बालाः च वृक्षगुल्मादीनां पृष्ठतः स्थित्वा आत्मरक्षणं चिन्तयन्ति स्म ।

शिवशङ्करः ग्रामप्रमुखस्य पुत्रः । सः दूरस्थे मातुलगृहे निवसति स्म, यतः तत्र उत्तमः प्राथमिकविद्यालयः आसीत् । इदानीं ग्रामम् आगतः सः शिवालयसमीपे नदीतीरे मित्रैः सह क्रीडन् आसीत् ।

सण्डः देवालयसमीपम् आगतवान् । कस्यापि उपरि आक्रमणं न कृतम् इत्यतः सण्डस्य मनसि महान् असन्तोषः आसीत् । तं दूरात् एव दर्शयन् एकः बालकः शिवशङ्करम् उक्तवान् - "एषः सण्डः महागर्वी । किन्तु एषः भगवतः शङ्करस्य वाहनम् अपि । अतः कोऽपि एतं ताडयितुं बन्धुं वा न इच्छति" इति ।

अत्रान्तरे एकः संन्यासी सण्डसमीपम् आगतवान् । सः अल्पम् एकं वस्त्रं धृत्वा अपरं वस्त्रं स्यूताकारेण बद्ध्वा स्कन्धेन धृतवान् आसीत् । बालाः सर्वे चिन्तितवन्तः यत् सः दृप्तः सण्डः तं पातयिष्यति, धावने असमर्थः संन्यासी भूमौ पतिष्यति इति ।

बालाः श्वासं निरुध्य प्रवर्तिष्यमाणं द्रष्टुं कुतूहलेन स्थितवन्तः आसन् । ग्रामप्रमुख-पुत्रः शिवशङ्करः तु घटनां समीपतः एव द्रष्टुम् इच्छन् वृषभसमीपं गतवान् । किन्तु वृषभः तं यथा द्रष्टुं न शक्नुयात् तथा पृष्ठभागे स्थितवान् आसीत् सः ।

संन्यासी सण्डस्य स्वभावं जानाति स्म । अतः सः गमनस्य वेगं न्यूनीकुर्वन् 'शिव शङ्कर ! शिव शङ्कर !' इति मन्दस्वरेण वदन् अग्रे गतवान् । शिवालयीयाय सण्डाय



परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् ।
धर्मे स्वीयमनुष्ठानं कस्यचित्तु महात्मनः ॥ – *हितोपदेशः*

*परोपदेशविषये सर्वे लीलया प्रवर्तन्ते । किन्तु तदनुगुणव्यवहारः तु केषाञ्चित् एव महात्मनां भवति ।*

शिवनामानि प्रियाणि आसन् एव । तत्कारणतः सः संन्यासिनं न अपीडयत् । संन्यासी निर्विघ्नं ततः निर्गतवान् ।

वृषभात् अनतिदूरे एव स्थितः शिवशङ्करः संन्यासिना कृतं शिव-नामोच्चारणं श्रुतवान् आसीत् । 'वृषभः कथं शान्तः करणीयः इति मया ज्ञातम्' इति सः चिन्तितवान् ।

'संन्यासी तु अपूर्वः जनः' इति सर्वे बालाः प्रशंसावचनानि उक्तवन्तः । शिव-शङ्करः एतत् श्रुत्वा अवदत् – "अहम् अपि वृषभसमीपं गन्तुं शक्नोमि" इति ।

"मास्तु । सर्वथा मास्तु । तत्र गमनम् अपायकरम्" इति सर्वे उक्तवन्तः ।

किन्तु शिवशङ्करः एतत् निराकुर्वन् – "वृषभस्य कोपोपशमनरहस्यम् अहं जानामि" इति वदन् वृषभसमीपं गतवान् । 'संन्यासी शिवशङ्कर ! इति वदति स्म । मम नाम शिवशङ्करः इत्येव' इति चिन्तयन् 'सः अहम् एव । सः अहम् एव ' इति वदन् वृषभस्य पुरतः गतवान् शिवशङ्करः ।

तं दृष्ट्वा क्रुद्धः वृषभः नासिकाभ्यां वायुं प्रेरयन् उच्चैः हूङ्कृतवान् । एतस्मात् भीतः शिवशङ्करः प्राणरक्षणार्थं ततः वेगेन पलायितवान् । धावनसमये शिलया घट्टितः सन् सः कण्टकमये गुल्मे अपतत् ।

अनतिदूरे गच्छन् संन्यासी एतत् दृष्ट्वा वेगेन प्रत्यागत्य शिवशङ्करम् उन्नीतवान् । शिवशङ्करस्य मित्रैः तु भीत्या पलायितम् आसीत् । शिवशङ्करस्य नेत्राभ्याम् अश्रूणि आगतानि । खिन्नः सः अचिन्तयत् – 'मया को वा दोषः कृतः ?' इति ।



# आत्मीयं मित्रम्

गोकुलस्य गोपालस्य च ग्रामः अभिन्नः । स्वकार्यार्थं कुत्रापि गतौ तौ प्रत्यागमन-समये एकत्र मिलितौ ।

गोपालस्य तु आत्मविकथ्यनस्वभावः । अपमानप्रसङ्गम् अपि सम्मानप्रसाङ्गत्वेन उपवर्णयन् सः श्रोतॄणां प्रशंसाप्राप्तौ अतिनिपुणः आसीत् ।

यावत् ग्रामः प्राप्तः तावता एकः अश्वशकटः तयोः अभिमुखम् आगतः । तं दृष्ट्वा गोपालः उक्तवान् - ''एषः शकटः महाधनिकस्य कृष्णयादवस्य खलु ? शकटे कृष्णयादवः स्यात् । बाल्ये आवां सहाध्यायिनौ आस्व । आ बाल्यात् महती मैत्री आवयोः । यदि सः मां पश्येत् तर्हि अनुरोधपूर्वकं स्वगृहं नीत्वा मधुरादिकं दत्त्वा बाल्यघटनाः श्रावयेत् घण्टां यावत् । अनिच्छता अपि मया तत्सर्वं श्रोतव्यं भविष्यति । तदर्थं मम कुत्रास्ति समयः ? गृहे तु कार्याणि राशीभूतानि सन्ति । अतः तस्य दृष्टिगोचरतां गन्तुं न इच्छामि अहम् । भित्तेः पृष्ठतः निलीय तिष्ठामि'' इति उक्त्वा पार्श्वमार्गे भित्तेः पार्श्वे स्थितवान् ।

अत्रान्तरे शकटः समीपम् आगतः । कौशेयवस्त्रधारी कृष्णयादवः दण्डहस्तः सन् शकटात् अवतीर्य क्रोधेन सेवकम् आदिष्टवान् - ''तं दुष्टं गृह्णातु तावत् । भित्तेः पृष्ठतः तिष्ठन् वराकः सः मां वञ्चयन् अस्ति'' इति ।

सेवकः भित्तिसमीपं यदा आगतः तदा गोपालः ततः धावितवान् । सेवकः प्रत्यागतः । कृष्णयादवस्य शकटः निर्गतः । किञ्चिदग्रे गतेन गोकुलेन मिलितवान् गोपालः । तदा गोकुलः पृष्टवान् - ''भवन्तं ताडयतु इति सेवकम् आदिष्टवान् आसीत् कृष्णयादवः । भवान् तु तम् आत्मीयमित्रं वदति स्म ! ....'' इति ।

तदा गोपालः उक्तवान् - ''तस्य स्वभावः एव तादृशः । बाल्ये अपि आवयोः एतादृशी क्रीडा प्रचलति स्म । तस्य कोपः मम पलायनं च मिथ्या । सर्वोऽपि अभिनयः अयम्'' इति ।





# सुवर्णसिंहासनम्-३

*(पूर्वं दक्षिणभारते कौण्डिन्यं, कालिन्दी, चम्पकः, कुन्दश्चेति चत्वारि प्रमुखराज्यानि आसन् । कौण्डिन्यराजः सारस्वतः स्वबुद्धिमत्तया बाहुबलेन च सर्वाणि राज्यानि जित्वा विशालं साम्राज्यं संस्थापितवान् । किन्तु तस्य दिवं गतेः अनन्तरं सर्वे राजानः स्वतन्त्राः जाताः । काश्चन परम्पराः अतीताः ।*

*कौण्डिन्यराजस्य श्रीदत्तस्य कालिन्दीराजस्य माधवसेनस्य च मैत्रीपूर्णः सम्बन्धः आसीत् । एतत् तु निश्चितम् आसीत् यत् कौण्डिन्ययुवराजस्य विजयदत्तस्य कालिन्दीराजकुमार्याः श्रीलेखायाः च विवाहः निर्वर्तनीयः इति । चम्पकराजस्य मरालभूपतेः कुदृष्टिः कौण्डिन्यस्थनिधेः विषये आसीत्, तत्पुत्रस्य चक्रभूपतेः तु श्रीलेखायाम् । मरालभूपतिः कूटनीतिम् अवलम्ब्य माधवसेनं स्वपक्षं प्रति आकृष्टवान् । सर्वे मिलित्वा कौण्डिन्यस्य आक्रमणार्थं योजनां कृतवन्तः । श्रीलेखाचक्रभूपत्योः विवाहस्य निर्वर्तनार्थं माधवसेनस्य अङ्गीकारः कथञ्चित् प्राप्तः मरालभूपतिना । किन्तु माधवसेनस्य पत्नी वसुमती इच्छति स्म यत् श्रीलेखा विजयदत्ताय एव दातव्या इति । अतः सा स्वपुत्रीं गुप्तरूपेण कौण्डिन्यं प्रति प्रेषितवती । श्रीलेखाविजयदत्तयोः विवाहः गान्धर्वविधिना प्रवृत्तः । तदनन्तरम् .....)*

एकत्र विजयदत्तः श्रीलेखां गान्धर्वविधिना परिणीतवान् । अपरत्र कालिन्दीदेशे श्रीलेखायाः पिता दिग्भ्रान्त्या निस्सहायः सन् उपविष्टः आसीत् । अन्यत्र चम्पकराजः मरालभूपतिः बुभुक्षितः सिंहः इव अवकाशं प्रतीक्षमाणः राजभवने उपविष्टः आसीत् ।

सा च ज्येष्ठमासस्य एकादशी । श्रीलेखा-चक्रभूपत्योः विवाहवाग्दानं तस्मिन् दिने निश्चितम् आसीत् । दिनद्वयात् पूर्वं मरालभूपतिः चक्रभूपतिः च सैन्येन सह कालिन्दीम् आगतवन्तौ आस्ताम् । 'विवाहानन्तरं बहुलदशमीपर्यन्तं तयोः वासः कालिन्द्याम् एव भवतु' इति पूर्वनिश्चयः कृतः आसीत् । बहुलदशम्याम् आक्रमणं निश्चितम् आसीत् । एषा योजना सज्जीकृता आसीत् मरालभूपति-माधवसेनाभ्याम् । माधवसेनः



यदा रथोत्सवे भागं गृहीतवान् तदा एव एषा योजना चिन्तिता आसीत् ।

योजनानिश्चयानन्तरं मरालभूपतिः माधवसेनम् उक्तवान् आसीत् - ''मित्र ! एतादृशविषयाः अन्तःपुरस्त्रीभिः अपि न ज्ञातव्याः । महाराज्ञी अपि काचित् स्त्री एव खलु ? स्त्रियः रहस्यगोपने सर्वथा असमर्थाः । ताभिः रहस्ययोजना ज्ञाता चेत् अपायः सम्मुखीकरणीयः भवेत्'' इति ।

माधवसेनाय मरलभूपतेः मधुरवचनानि अरोचन्त । अतः सः पत्नीं पुत्रीं चापि अविसृच्य एव विवाहं निश्चितवान् आसीत् । एतादृशः व्यवहारः अन्याय्यः इति भावना तेन न प्राप्ता एव । विवाहः सामान्यः विषयः न इत्यपि तेन न चिन्तितम् ।

'पुत्री श्रीलेखा रहस्यरूपेण राजभवनतः अदृश्यतां गता अस्ति' इति यदा तेन ज्ञातं तदा माधवसेनः वज्राघातं प्राप्तवान् इव । धनलोलुपताकारणतः सः कौण्डिन्य-विरोधितया मरालभूपतिना कृतायां दुष्टयोजनायां भागं गृहीतवान् आसीत् । श्रीलेखाचक्रभूपत्योः विवाहः अपि तेन अनुज्ञातः आसीत् । वाग्दानसमारोहस्य निमित्तं चक्रभूपतिः मरालभूपतिः च उपस्थितौः अपि आस्ताम् । नूतनमित्रस्य मरालभूपतेः आदेशस्य अनुगुणं समग्रां योजनां कृत्वा पत्नी अपि यथा न जानीयात् तथा रहस्यं पालितवान् आसीत् माधवसेनः ।

किन्तु राज्ञी वसुमती बुद्ध्या युक्त्या च पतिम् एव अतिशेते स्म । मरालभूपतिः यस्मिन् दिने माधवसेनं सानुरोधं निमन्त्र्य विशेषसम्माननं कृतवान्, तस्मिन् एव दिने तस्य व्यवहारविषये सन्देहं प्राप्तवती आसीत् सा । धनाशां राज्याशां वा प्रदर्श्य यः कोऽपि मम पतिं वशीकर्तुम् अर्हति इति सा जानाति स्म ।

मरालभूपतिः माधवसेनम् उद्दिश्य - ''मित्रवर ! कौण्डिन्यदेशस्य धनागारे स्थिता सम्पत्तिः अस्मदीया एव । अस्मत्पूर्वजाः सारस्वतराजाय उपायनरूपेण महता प्रमाणेन सम्पत्तिं समर्पितवन्तः आसन् । ताम् एव सम्पत्तिं वशीकर्तुं वयं यदि प्रयत्नं कुर्याम तर्हि न तत्र अनौचित्यम्'' इति सयुक्तिकम् उक्त्वा तं वशीकृतवान् आसीत् ।

राज्ञी वसुमती माधवसेन-मरालभूपत्योः मध्ये प्रवर्तमानस्य वार्तालापस्य विषयस्य

ज्ञानार्थं गुप्तचरान् कांश्चन नियोजितवती आसीत् । तयोः कुतन्त्रं यदा ज्ञातं तदा सा चिन्ताग्रस्ता कुद्धा च जाता । राजकुमारः चक्रभूपतिः अशिष्टः स्वार्थी च इति सा जानाति स्म । एतादृशाय राजकुमाराय सुसंस्कृतां कोमलहृदयां पुत्रीं दातुं सर्वथा न इच्छति स्म सा ।

केनचित् वा उपायेन एतत् कुतन्त्रं भेत्तव्यम् इति सा सङ्कल्पितवती । पतिः माधवसेनः मरालभूपतिना पूर्णतः वशीकृतः आसीत् इत्यतः उपदेशेन अनुनयेन वा किमपि साधयितुं न शक्यते इति अवगतवती आसीत् सा । यस्य देशस्य वशीकरणार्थं योजना क्रियमाणा अस्ति सः समीपबन्धुः हितचिन्तकः च इत्यपि विस्मृतम् आसीत् तेन ।



वसुमती श्रीलेखां सर्वं निवेदितवती । सर्वं श्रुत्वा श्रीलेखा क्षणकालं स्तब्धा जाता । क्षणकालानन्तरं सा विषादमिश्रितस्वरेण मातरम् उक्तवती - ''अम्ब ! अहं मरणम् एव वरं भावयामि, न तु चक्रभूपतेः परिणयम् । अम्ब ! भवती जानाति एव यत् अहं विजयदत्तात् अन्यं परिणेतुं सिद्धा नास्मि इति । मम हृतये विजयदत्तात् अन्यः कोऽपि स्थानं प्राप्तुं न अर्हति एव । यदि मम विवाहः भवेत् तर्हि सः विजयदत्तेन सहैव । सर्वं जानन् अपि पिता एतादृशं निर्णयं किमर्थं कृतवान् इति न ज्ञायते । पिता सम्भ्रान्तचित्तः जातः अस्ति । शत्रूणां जाले पतितः अस्ति सः । सार्वभौमत्वप्राप्तीच्छापिशाची तस्मिन् आविष्टा अस्ति । विजयदत्तकुलम् अस्माकं हितम् एव चिन्तयति इत्यपि न स्मरति सः । कौण्डिन्यराजवंशस्य सम्बन्धवर्धनात् एव अस्माकं देशस्य हितं सेत्स्यति इत्यपि न जानाति सः । पिता एव मां नरके पातयितुम् उद्युक्तः अस्ति । एवं स्थिते को वा शरणं मम ? किमर्थं वा जीवनीयं मया ?'' इति ।

''वत्से ! अलं चिन्तया विषादेन वा । प्राणत्यागः स्वप्ने अपि न चिन्तनीयः भवत्या । आवां मिलित्वा एतत् कुतन्त्रम् उपायेन भञ्जयितुं शक्नुयाव'' इति उक्त्वा पुत्र्याः सान्त्वनं कृत्वा वसुमती कौण्डिन्यदेशं प्रति पुत्र्याः प्रेषणार्थं रहसि योजनां कृतवती । काभ्यश्चित् आप्तसखीभ्यः ऋते एतं विषयं कोऽपि न जानाति स्म ।

वाग्दानदिने माधवसेनः पत्न्याः वसुमत्याः



पुरतः विवाहनिश्चयवार्तां यदा निवेदितवान् तदा एव श्रीलेखायाः अदृश्यतागमनं तेन ज्ञातम् । मरालभूपतिः चक्रभूपतिः च प्रासादे उपस्थितौ आस्ताम् । वाग्दानसमारोहस्य अनन्तरं कौण्डिन्यस्य आक्रमणार्थं योजना कृता आसीत् ।

माधवसेनस्य प्रासादे वसता मराल-भूपतिना वार्ता ज्ञाता यत् पित्रा विजयदत्तः गुरुकुलात् आनायितः अस्ति इति । एषा वार्ता सर्वथा अप्रिया आसीत् तस्य । 'विजयदत्तः बुद्धिमान् शूरः च अस्ति । तस्य अनुपस्थितौ एव युद्धकरणं लाभाय' इति योजना कृता आसीत् तेन । किन्तु इदानीं तस्यां विघ्नरूपेण उपस्थितः आसीत् विजयदत्तः ।

''अस्माभिः शीघ्रातिशीघ्रम् आक्रमणं करणीयम्, येन विजयदत्तश्रीदत्तौ सन्नाहार्थं पर्याप्तावकाशं प्राप्तुं न शक्नुयाताम्'' इति पुत्रं चक्रभूपतिम् उक्त्वा एताम् एव वार्तां माधवसेनाय अपि प्रेषितवान् सः ।

किङ्कर्तव्यतामूढः जातः आसीत् माधवसेनः । अत्रान्तरे गुप्तचराः वार्ताम् आनीतवन्तः आसन् यत् श्रीलेखा श्रीदत्तस्य प्रासादे सुरक्षिततया अस्ति इति । 'किम् एतत् प्रवर्तमानम् अस्ति !' इति चिन्तयन् माधवसेनः आश्चर्यम् अनुभूतवान् ।

'परिवर्तितपरिस्थितौ मरालभूपतेः व्यवहारः कीदृशः स्यात् ? स्वलाभाय सः मम स्नेहार्थं हस्तं प्रसारितवान् आसीत् । श्रीलेखां परिणेतुम् इच्छन् चक्रभूपतिः यदि तस्याः अनुपस्थितिं जानीयात्, कौण्डिन्यदेशे तस्याः उपस्थितिं जानीयात् तर्हि सः किं क्षमां प्रदर्शयेत् ? अथवा मरालभूपतेः स्नेहः अनुवर्तते इत्येव भावयेम, तर्हि अपि कौण्डिन्यदेशस्य वशीकरणानन्तरं सः किं वा कुर्यात् ? उद्देशपूर्तेः अनन्तरं सः मद्विषये किमर्थं वा चिन्तयेत् ? यदि चक्रभूपति-श्रीलेखयोः विवाहः जातः स्यात् तर्हि परिस्थितिः अन्या अभविष्यत् प्रायः । किन्तु स च विवाहः असम्भवः जातः अस्ति । इदानीम् अहं मरालभूपतेः श्रीदत्तस्य च मैत्रीतः वञ्चितः जायमानः अस्मि । अग्रिमकाले अहम् असहायः भविष्यामि । तदा यः कोऽपि मम राज्यं वशीकर्तुं शक्नुयात् । मरालभूपतिः एव वैरभावनया मम हननं कारयेत् अपि ।'

एवं चिन्तनस्य अनन्तरं तेन वस्तुस्थितिः अवगता स्पष्टतया । 'मरालभूपतेः

मधुरवचनैः वशीकृतः अहं महत् अनौचित्यम् आचरितवान् । मया प्रमादः कृतः । एतस्मिन् क्षणे वा यदि मया जागरूकता न आश्रीयते तर्हि मम पतनं निश्चितम् । अन्यच्च प्रियपुत्र्याः जीवनं मया क्रीडाविषयीकृतम् । तस्याः सर्वनाशार्थं मयैव प्रयासः कृतः । धिक् माम्' इति स्वगतं वदन् पश्चात्तापम् अनुभवन् चिन्तासागरे निमग्नः जातः ।

सः यदा एवं चिन्तनसागरे निमग्नः आसीत् तदा वसुमती तस्य प्रकोष्ठं प्रविष्टवती । पतौ धैर्यपूरणार्थं सा उक्तवती - ''मरालभूपतेः कुतन्त्रस्य वशं गतेन भवता यत् कृतं तत् विस्मरतु । इदानीं वा विवेकः प्राप्तः खलु । तदेव सन्तोषाय । समग्रं दक्षिणापथं जित्वा साम्राज्यं स्थापयितुं सामर्थ्यम् अस्ति - विजयदत्तस्य एकस्य एव इति मम दृढः विश्वासः । चक्रभूपतिः तु तस्य सेवकत्वं प्राप्तुम् अपि न अर्हति । विजयदत्तस्य नेतृत्वं प्राप्तवती कौण्डिन्यसेना मरालभूपतिं लीलया जेष्यति इत्यत्र नास्ति एव सन्देहः'' इति ।

''किन्तु एतावता श्रीदत्त-विजयदत्तौ मयि असन्तोषं जुगुप्सां च प्राप्तवन्तौ स्यातां खलु ? मद्विषये यः शत्रुताभावः तयोः मनसि उत्पन्नः अस्ति तस्य निवारणं कथम् ?'' इति पृष्टवान् माधवसेनः ।

''तौ वस्तुस्थितिं स्पष्टतया कथयतु । 'इदानीम् अस्मत्पुत्री भवत्प्रासादे अस्ति इत्यतः मैत्री सिद्धा इव' इति वार्तां प्रेषयतु । विजयदत्त-श्रीलेखयोः कृते आशीर्वादं सूचयतु । एतत्सर्वं दूतद्वारा न, अपि तु कपोतद्वारा प्रेषयतु । कपोतद्वारा सन्देशप्रेषणम्



एव निरापदं द्रुतगामि च'' इति उक्तवती राज्ञी ।

माधवसेनः वसुमत्याः उपदेशम् अङ्गीकृतवान् ।

वसुमती पुनः उक्तवती - ''वञ्चकः मरालभूपतिः तादृशम् एकं राज्यं स्वायत्तीकर्तुं नाशयितुं च इच्छति, येन तद्विषये किमपि न अपराद्धम् । अतः सः योग्येन क्रमेण दण्डितः भवेत् । अतः भवान् स्वसेनाम् आज्ञापयतु यत् यथा मरालभूपतिसेना कौण्डिन्यदेशस्य उपरि आक्रमणं करोति तथैव अस्माभिः अपि मरालभूपतेः सेनायाः उपरि आक्रमणं करणीयम् इति । उभयोः सेनयोः मध्ये पतिता मरालभूपतिसेना असहाया भविष्यति । किञ्चित्कालं विजयदत्त-श्रीदत्तौ वस्तुस्थितिम्



प्रातःकालस्य सूर्यकिरणाः श्रीदत्तस्य प्रकोष्ठं यावत् स्पृशन्तः आसन् तावता कश्चन श्वेतकपोतः तस्य स्कन्धे आगत्य उपाविशत् । कपोतस्य कण्ठे एकं पत्रं बद्धं दृश्यते स्म । कालिन्दी-कौण्डिन्ययोः मध्ये परस्परवार्ता-प्रेषणार्थम् एवं कपोतस्य उपयोगः क्रियते स्म क्वचित् ।

श्रीदत्तः कुतूहलेन कपोतस्य कण्ठे बद्धं पत्रम् उद्घाट्य पठितवान् । पत्रपठनानन्तरं तस्य मुखे मन्दहासः उत्पन्नः । सः विजयदत्तं श्रीलेखां च आहूय तत् पत्रं यच्छन् - "चिरम् अभिवर्धताम्" इति उक्तवान् ।

पत्रं पठित्वा नितरां सन्तुष्टः विजयदत्तः - "तात ! माधवसेनस्य हृदये एतावच्छीघ्रं परिवर्तनं जातं यत् तत् तु महते सौभाग्याय । तस्मिन् परिवर्तनं भवेत् इति मया निरीक्षितम् आसीत् एव । किन्तु तत् एतावच्छीघ्रं स्यात् इति तु न निरीक्षितम् आसीत् । श्रीलेखायां स्थिता प्रीतिः एव हृदयपरिवर्तनस्य कारणं स्यात् । अथवा महाराज्ञी वसुमती अपि एतदर्थं विशेषप्रयत्नं कृतवती स्यात्" इति ।

"अद्य शुभदिनम् । शुभोऽस्मिन् दिने निधिखननम् अपि उत्तमफलं दद्यात्" इति उक्तवान् श्रीदत्तः ।

त्रयः अपि सर्वविधसन्नाहं समाप्य प्रासादस्य पूर्वदिशि स्थितं खननस्थलं गतवन्तः । राजगुरुः शिवानन्दः अपि तावता तत्र उपस्थितः आसीत् ।

राजगुरुः मन्त्रं पठन् निश्चिते स्थले एकं वृत्तं लिखितवान् । तस्य केन्द्रभागं मन्त्रपूतेन जलेन अभिषिक्तवान् च । षष्टिः भटाः

अवगन्तुं क्लेशम् अनुभवेतां, तथापि अल्पे एव काले भवतः आशयम् अवगत्य तौ भवतः प्रशंसाम् अवश्यं कुर्याताम्" इति ।

"अहं वस्तुतः मरालभूपतेः तत्पुत्रस्य च कुतन्त्रेण वशीकृतः सन् अविवेकी जातः आसम् । राज्याकाङ्क्षा माम् अन्धं कृतवती आसीत् । दिवास्वप्नशीलताकारणतः वस्तुस्थितिः विस्मृता आसीत् मया । मत्तः कीदृशम् अकार्यं जायमानम् आसीत् इति यदा स्मरामि तदा लज्जया मम शिरः अवनतं भवति । पुत्र्याः एव जीवनं नाशयितुम् अहम् उद्युक्तः आसम् । भवती मां विवेकं बोधितवती । अद्यैव अहं सन्देशं प्रेषयिष्यामि" इति वदन् भयात् ग्लान्या च मुक्तः सन् माधवसेनः हसितवान् ।

खननस्य आरम्भं कृतवन्तः ।

मध्याह्नपर्यन्तम् अपि कार्यम् अनुवृत्तम् । राजा श्रीदत्तः विजयदत्तः श्रीलेखा च तत्रैव उपस्थिताः आसन् ।

मध्याह्नभोजनोत्तरं पुनरपि खननकार्यम् अनुवृत्तम् । त्रयोदशपादगभीरतापरिमितं खननं यदा कृतं तदा तत्र गुहासदृशः रिक्तप्रदेशः प्राप्तः । तस्य अन्तः पञ्चदश-पादमितः कश्चन सर्पः स्थितः आसीत् । सः जीवितः इव दृश्यते स्म, किन्तु मूर्तिवत् निश्चेष्टः ।

राजगुरुः श्रीदत्तं विजयदत्तं च उक्तवान् - ''मया ध्यानसमये एषः एव सर्पः दृष्टः आसीत् । एषः न साधारणः सर्पः । मन्त्रशक्तिपूर्णः अस्ति एषः । पूर्वजाः भूमौ निधिं संस्थाप्य तस्य रक्षणार्थं तान्त्रिकाणां साहाय्येन एतादृशान् सर्पान् सृजन्ति स्म । एते सर्पाः धनं रक्षन्तः सर्जकस्य आदेशानुगुणं व्यवहरन्ति'' इति ।

''अहो ! परमाश्चर्यकरम् एतत् !'' इति उक्तवान् विजयदत्तः ।

तदा राजा उक्तवान् - ''गुरुवर्य ! भवतः भविष्यवाणी अवितथा एव जाता । भविष्यत्काले अस्माकं शुभं निश्चितम् । शत्रूणां पतनम् अपि निश्चितम् एव'' इति ।

''भोजनानन्तरं यदा खननम् अनुवृत्तं तदा फूत्कुर्वन् एषः सर्पः प्रकटः जातः । भटाः कोलाहलं कुर्वन्तः उपरि आगतवन्तः । सर्पस्य श्वासतः घोरः तापः निस्सरति स्म । अहं सर्पस्य समीपं गत्वा उष्णतां स्वयम् अनुभूय अवगतवान् यत् एषः मान्त्रिकः सर्पः एव इति । ततः अहं भवन्तौ आहूतवान्'' इति उक्तवान् राजगुरुः ।

''एतस्य भयङ्करसर्पस्य निवारणं कथं भवेत् गुरुवर्य ?'' इति पृष्टवान् महाराजः ।

''मन्त्रद्वारा एव एतादृशसर्पाः निवारणीयाः भवन्ति । किन्तु निधिः येन प्राप्तव्यः अस्ति तस्य आदेशात् अपि ते ततः अपगच्छन्ति । तथापि अस्माभिः एतादृशे व्यवहारे अजागरूकता न आश्रयणीया'' इति उक्त्वा राजगुरुः विजयदत्तं पश्यन् - ''वीरवर ! अग्रे परिस्थितिः कीदृशी भवेत् इति केनापि न ज्ञायते । अतः सर्वविधाः आपत्तीः अपि सम्मुखीकर्तुं भवान् सिद्धः भवतु'' इति आदिष्टवान् ।







# २. वर्षारात्रौ स्नातकत्वप्राप्तिः

''तात ! आर्याः अन्यदेशात् अगत्य भारतम् आक्रान्तवन्तः इत्येतत् मिथ्या इति प्रमाणीक्रियताम् इति एषा मां सानुरोधं वदन्ती अस्ति !'' - सन्दीपः भगिन्या चमेल्या सह देवनाथस्य प्रकोष्ठं प्रविशन् उक्तवान् ।

देवनाथवर्यः सकृत् तौ दृष्ट्वा पुरतः स्थितं पठ्यमानं पुस्तकं पिहितवान् ।

''सन्दीप ! 'भवती होनेलुलुतः मेडागास्करतः वा न आगता एतद्गृहम् इत्येतत् प्रमाणीक्रियताम्' इति भवान् चमेलीं वदतु तावत्'' - देवनाथवर्यः अकथयत् ।

''अहं तु एतस्मिन् एव गृहे जाता । अत्रैव प्रवृद्धा च । अहम् एतद्गृहीया एव'' - चमेली उक्तवती ।

''युक्तम् एतत् ! 'भवती एतद्गृहवासिनी न, होनेलुलुतः मेडागास्करतः वा आगता' इति यदि उच्यते तर्हि मया तत् प्रमाणीकरणीयं भवेत् । भारतीयानाम् अपि एषा एव कथा । ते आ बहोः कालात् अत्रैव आसन् । हिमालयस्य अपरपार्श्वतः ते आगताः इति वक्तुं नास्ति किमपि प्रमाणम् । तेषां प्राचीनसाहित्ये वेदे, यश्च शिश्वस्यैव प्राचीनतम-साहित्यत्वेन परिगण्यते, तत्र एकवारम् अपि उल्लेखः न प्राप्यते यत् ते कुत्रचित् स्थितं गृहं परित्यज्य अत्र आगताः इति । किञ्चन आख्यानं, काचित् परम्परा, ऐतिहासिकघटना काचित् वा अन्यप्रदेशतः तेषाम् आगमनं प्रमाणीकरोति । प्रत्युत ते अत्रत्याः इत्येतम् अंशं प्रमाणयितुं सन्ति अनेकानि प्रमाणानि । इतः गताः ते अन्यदेशेषु स्वसंस्कृतेः धर्मस्य प्रभावं जनितवन्तः इत्यत्रापि प्रमाणानि लभ्यन्ते'' - देवनाथवर्यः अवदत् ।

''तात ! एवं तर्हि आर्याः अन्यदेशतः आगताः इत्येतस्य वादस्य महत् बलं कथं वा लब्धम् ?'' - चमेली उक्तवती ।

''अस्मान् शासितवन्तः आंग्लेयाः एतं सिद्धान्तं प्रसारितवन्तः । स्वस्य आगमनं समर्थयन्तः ते - 'अत्रत्याः भवन्तः अपि अन्यदेशतः आगताः' इति बोधितवन्तः । दौर्भाग्यस्य विषयः नाम अस्मद्देशीयाः इतिहासकाराः एतं सिद्धान्तं कदापि न खण्डितवन्तः'' इति उक्तवान् देवनाथवर्यः ।

मित्रैः आहूतः सन्दीपः ततः निर्गतवान् । तस्य विद्यालये वार्षिकोत्सवस्य सन्नाहः प्रचलति स्म । अध्यापकैः छात्रैः च सम्भूय

भामहः



# -गाथा

गोष्ठ्यां करणीयानां कार्याणां विभाग-निर्वहणादिनिमित्तं योजना करणीया आसीत् ।

''तात ! ह्यः भवान् सन्दीपं नचिकेतसः कथां श्रावितवान् इति श्रुतम् । सः महता गर्वेण मां तां कथां श्रावितवान् । तादृशीम् एव एकां कथां माम् अपि श्रावयतु भवान् अद्य । तस्य प्रत्यागमनस्य अनन्तरम् अहम् अपि तं तां कथां श्रावयिष्यामि गर्वेण'' - इति उक्तवती चमेली ।

''अस्तु तावत् । प्राचीनकाले गुरु-शिष्यसम्बन्धः कीदृशः भवति स्म इत्येतस्य निरूपिकां कथां श्रावयिष्यामि । वस्तुतः एतत् कथामात्रं न, अपि तु वास्तविकी घटना । यस्य जीवनकथाम् अहं श्रावयामि सः अग्रिमे काले महर्षिः जातः ।''

एतावद् उक्त्वा देवनाथवर्यः कथाम् आरब्धवान् -

धौम्यो नाम कश्चन ऋषिः आसीत् । पर्वतप्रदेशे आसीत् तदीयं गुरुकुलम् । तत्र अध्ययनं कर्तुं विभिन्न-देशेभ्यः छात्राः आगच्छन्ति स्म । प्रशस्ते परिसरे वसन्तः ते प्रकृतिजीवनस्य रसम् आस्वादयन्तः तत्र अध्ययननिरताः भवन्ति स्म ।

गुरोः वासस्थानम् एव गुरुकुलम् इति उच्यते । तच्च स्थलम् आश्रमपदेनापि निर्दिश्यते । आश्रमस्य गुरुकुलस्य चापि प्रमुखः भवति स्म गुरुः एव । छात्राः यथा तथैव केवलयोगशास्त्रस्य अध्ययनार्थम् अपि केचन आश्रमे निवसन्ति स्म ।''

चमेली मध्ये पृष्टवती - ''तात ! योगः नाम कः ? तद्विषये विवरणं ज्ञातुम् इच्छामि अहम् । किन्तु तत् अनन्तरं भवतु । सन्दीपस्य प्रत्यागमनात् पूर्वं कथां समग्रतया श्रोतुम् इच्छामि अहम्'' इति उक्तवती चमेली ।

तदा देवनाथः हसन् अवदत् - ''अस्तु तावत् । भवत्याः अग्रजस्य प्रत्यागमनस्य अनन्तरम् एव योगविषये वदिष्यामि । प्रकृतं कथाम् अनुवर्तयाम तावत् ।

धौम्यस्य आश्रमात् अनतिदूरे काचित् निर्झरी आसीत् । तस्याः जलम् उपयुज्य आश्रमवासिनः छात्राः च कृषिं कुर्वन्ति स्म ।

कस्मिंश्चित् दिने महती वृष्टिः आरब्धा । द्वितीये दिने रात्रिपर्यन्तम् अपि सा न स्थगिता ।





तदा आचार्यः धौम्यः चिन्तामिश्रितस्वरेण अवदत् - "निर्झर्याः जलं बन्धस्य ऊर्ध्वभागं स्पृष्टवत् स्यात् तर्हि अस्माकं कृषिः जले निमग्ना भवेत् ।"

गुरुकुलस्य छात्रेषु आरुणिः अधिक-बुद्धिमान् गुरोः विश्वासपात्रं च आसीत् ।



शास्त्रप्रयोगक्षेत्रे सः पूर्णज्ञानं सम्पादितवान् आसीत् । सर्वाणि दर्शनानि अपि अधीतानि आसन् तेन । योगशास्त्रे अपि नैपुण्यं प्राप्तवान् आसीत् सः । तथापि गुरुकुलतः निर्गमनार्थं गुरोः अनुज्ञा न प्राप्ता आसीत् तेन ।

आचार्यस्य चिन्ताविषयः यदा ज्ञातः तदा आरुणिः क्षेत्रदर्शनार्थं ततः निर्गतवान् । वृष्टिः किञ्चिदिव क्षीणा आसीत् तदा । पुनः पुनः स्फुरन्त्याः तडितः प्रकाशस्य साहाय्येन सः मार्गम् अभिजानन् अग्रे गतवान् ।

एकत्र बन्धः शिथिलतां गतः आसीत् । ततः निर्गतं जलं क्षेत्रं प्रविशत् आसीत् । आरुणिः मृत्तिकां पातयन् बन्धं समीकर्तुं प्रयत्नं कृतवान् । किन्तु हा हन्त, सः असफलः जातः । तेन पात्यमानां मृत्तिकाम् अपि आत्मना सह वहत् जलं क्षणे क्षणे वेगं वर्धयति स्म ।

आश्रमस्य अन्यजनान् आनीय बन्धं समीकर्तुं शक्यम् आसीत् । किन्तु तदर्थं समयः अपर्याप्तः ! एकैकः क्षणः अपि नितरां महत्त्वपूर्णः आसीत् तदा । क्षणकालम् आरुणिः नेत्रे निमील्य एकाग्रचित्ततया चिन्तनं कृतवान् । अग्रे यत् करणीयं तद्विषये निर्णयः कृतः तेन ।

बन्धः यत्र भग्नः आसीत् तत्र सः शयितवान् । अनन्तरकाले वृष्टिः यद्यपि अनुवृत्ता तथापि जलपूरतः क्षेत्रं रक्षितम् अभवत् । वृष्टिकारणतः, शैत्यकारणतः च आरुणेः शरीरं जडवत् जातम् । सः अचेतनः जातः ।

उषःकालः अतीतः चेदपि आरुणिः यदा न प्रत्यागतः तदा धौम्यः शिष्यगणेन सह क्षेत्रं गतवान् । जलबन्धमध्ये अचेतनावस्थायां स्थितः आरुणिः तैः दृष्टः । एतत् दृष्ट्वा सर्वे



आश्चर्येण स्तब्धाः जाताः ।

शिष्याः केचन तम् उन्नीय आश्रमम् आनीय प्रथमोपचारं कृतवन्तः । अन्ये केचन मृत्तिकया बन्धं समीकृतवन्तः । यदा आरुणिः सचेतनः जातः तदा आचार्यः धौम्यः अवदत् - "वत्स ! भवतः अध्ययन-कालः समाप्तः । अद्य भवान् विशिष्टरीत्या स्नातकोपाधिं प्राप्तवान् अस्ति" इति ।

आरुणिः उत्थाय आचार्यं कृतज्ञताभावेन नमस्कृतवान् ।

"अहो, अपूर्वः व्यवहारः आरुणेः !" - इति आश्चर्येण उक्तवती चमेली ।

"भवत्यै कथा अरोचत यत् तत्तु महते सन्तोषाय । आरुणिः स्नातकपदवीं प्राप्तुं मौखिकोत्तराणि न दत्तवान्, प्रत्युत स्वव्यवहारेण उत्तरं दत्त्वा सः उत्तीर्णतां प्राप्तवान् । सः विद्वान् सन् अपि विनम्रः आसीत् । आवश्यकतायां सत्यां शारीरकश्रमं वोढुं सिद्धः आसीत् एव सः । क्षेत्ररक्षणं तस्य लक्ष्यम् आसीत् । लक्ष्यसिद्धये सः सङ्कल्पदृढतां प्रदर्शितवान् । योग्यं शिक्षणम् आदर्शवादितां यथार्थवादितां च बोधयति । अहङ्कारपरित्यागं बोधयत् तत् त्यागसमर्पण-भावम् अस्मासु जागरयति । आरुणेः व्यवहारः सहजः अकृत्रिमः च आसीत् । ततः ज्ञायते यत् पूर्वोक्ताः सर्वे उदात्तगुणाः आरुणेः व्यवहारे ओतप्रोततया समवेताः आसन् इति" - आरुणेः व्यवहारस्य विश्लेषणं कुर्वन् उक्तवान् देवनाथवर्यः ।

"तात ! धन्यवादाः भवते ! अद्य अहम् अग्रजम् एतां कथां श्रावयितुम् अर्हामि" इति आनन्देन उक्तवती चमेली ।

"किं सन्दीपश्रावणोद्देशमात्रेण मया एषा कथा कथिता ? आरुणेः जीवने दृष्टान् गुणान् स्वव्यवहारे आनेतुं किं प्रयत्नः न क्रियते ?"

"अवश्यं करोमि तात ! उपकृतास्मि ।"



## एतन्मासे जाताः महापुरुषाः

# त्रयः सिक्खगुरवः

सिक्खमतीयानां ज्येष्ठगुरवः दश । तेषु त्रयः एप्रिल्मासे एव उत्पन्नाः । ते च - गुरुः आनन्दः (२३, एप्रिल् १५०४), गुरुः अर्जुनदेवः (१४, एप्रिल् १५६३), गुरुः तेगबहादुरः (१२, एप्रिल् १६२१) च ।

गुरुनानकः (१४६९ - १५३८) सिक्खमतस्य संस्थापकः । यदा देहत्यागसमयः आसन्नः तदा तेन उत्तराधिकारी कोऽपि निश्चेतव्यः आसीत् । तन्मतानुयायिषु ये समर्थाः तेषु तत्पुत्रः अपि अन्यतमः आसीत् । किन्तु गुरुनानकः स्वजन-व्यामोहम् अतिक्रम्य व्यवहर्तुं समर्थः आसीत् । अतः सः आनन्दम् उत्तराधिकारित्वेन चितवान् । तस्य निर्णयः उचितः एव जातः । गुरुः आनन्दः स्वस्य कर्तव्यं सम्यक् एव निर्वहन् योग्यनायकः सञ्जातः ।



गुरुः अर्जुनदेवः पञ्चमः गुरुः । चतुर्थगुरोः रामदासस्य पुत्रः सः । अर्जुनदेवेन आदिग्रन्थः सङ्कलितः । पूर्वगुरुभिः रचितानि तत्त्वपदानि तत्र सङ्गृहीतानि सन्ति । हिन्दुश्रद्धापोषकाः बहवो विषयाः आदिग्रन्थे सन्ति ।

चक्रवर्तिनं जहाङ्गीरं विरुध्य व्यवहृतवते राजकुमाराय खुस्रवे अर्जुनदेववर्येण साहाय्यं प्रदत्तम् । राजकीयदृष्टिः काऽपि न आसीत् तस्य साहाय्यकरणस्य पृष्ठभूमौ । युवराजस्य कष्टं दृष्ट्वा तेन तथा कृतम् आसीत् । किन्तु एतत् कृत्यं जहाङ्गीरस्य कोपम् अवर्धयत् । जहाङ्गीरस्य कोपः गुरोः मरणस्य कारणं जातः ।

गुरुः तेगबहादुरः नवमः गुरुः । सः मोगलसम्राजः औरङ्गजेबस्य कोपस्य पात्रं जातः । औरङ्गजेबः काश्मीरब्राह्मणानां विषये यत् अन्याय्यं कृतवान् तस्य विरोधं कृतवान् तेगबहादुरः । औरङ्गजेबः तं चर्चार्थं निमन्त्रितवान् । तेगबहादुरः एतदर्थं सिद्धः जातः । आगतं तं बद्ध्वा कारागारे स्थापितवान् औरङ्गजेबः । ततः हिंस्रक्रमेण तस्य संहारः अपि तेन कारितः ।

एषा एव घटना सिक्खसम्प्रदायेतिहासस्य परिवर्तकबिन्दुरूपेण परिवृत्ता । तेगबहदुरस्य पुत्रः गुरुगोविन्दसिंहः स्वसम्प्रदायानुयायिषु प्रेरणां सम्पूर्य मोगलशासनं विरुध्य निरन्तरयुद्धम् उद्घोषितवान् ।



# क्रीडनात् आनन्दः

सुवर्णगिरिराज्यस्य शासकः रत्नपालः । चतुरङ्गक्रीडायां तस्य विशेषाभिरुचिः। सर्वदा अपि अन्तिमविजयः तस्यैव । एवं यदा यदा जयः प्राप्यते तदा तदा विशेषानन्दम् अनुभवति स्म सः । विशेषतः तु यदा सुबुद्धिना सह प्रवृत्तायां क्रीडायां जयः प्राप्यते तदा तु अपरिमितः आनन्दः प्राप्यते स्म तेन । यतः राजा तं स्वसमानपटुं भावयति स्म ।

एकदा राजा सुबुद्धिना सह प्रवृत्तायां क्रीडायां पराजितः अभवत् । पराजयस्य रुचिः तेन ऐदम्प्राथम्येन आस्वादिता । पराजयम् असहमानः सः क्रोधेन दन्तान् कटकटायमानः उत्थाय क्रीडाफलकं क्षिप्त्वा अन्तःपुरं प्रति निर्गतवान् ।

अनन्तरदिने यदा क्रोधः पूर्णतः उपशान्तः तदा राजा आत्मनः व्यवहारस्य विषये पश्चात्तापम् अनुभूतवान् । सः सुबुद्धिम् आहूय खेदं प्रकटयन् क्षमां याचितवान् । पुनः तयोः चतुरङ्गक्रीडा आरब्धा । एतस्यां राज्ञः एव विजयः जातः । ततः तस्य मुखं विकसितम् । किन्तु द्वितीयपर्याये राज्ञः पराजयः जातः । एतस्मात् राज्ञा यद्यपि क्रोधः प्राप्तः तथापि तं व्यवहारेण अप्रदर्शयन् सः मौनेन उत्थाय अन्तःपुरं गतवान् ।

एतदनन्तरं बहुवारं सुबुद्धिना सह क्रीडाः प्रवृत्ताः । तासु राज्ञा अनेकवारं पराजयः प्राप्तः । अतः क्रीडायां राज्ञः आसक्तिः न्यूना जाता । तत्परिणामतः राजा नित्यव्यवहारे अपि तिरुत्साही जातः । राजकार्येषु अपि तेन औदासीन्यं दर्श्यते स्म । सदा तस्य मुखं म्लानं तिष्ठति स्म ।

'निरन्तरपराजयतः राज्ञः मनः आघातितम् अस्ति' इति चिन्तितवान् मन्त्री अनन्तरदिने प्रवृत्तायां क्रीडायाम् उद्देशपूर्वकं पराजयं प्राप्तवान् । एतस्मात् राज्ञः मुखं विकसितम् । राज्ञः मुखे प्रसन्नतां दृष्ट्वा मन्त्री अपि नितरां सन्तुष्टः । एतदनन्तरकाले प्रवृत्तासु सर्वासु क्रीडासु मन्त्री एव पराजितः भवति स्म ।

राजा रत्नपालः कानिचन दिनानि जयात् प्राप्यमाणात् आनन्दात् सुखम् अनुभवति



स्म । किन्तु गच्छता कालेन 'सः आनन्दोऽपि दुर्बलः' इति भावः तेन प्राप्तः । अतः सः पूर्वं यथा, तथा इदानीं मन्त्रिणः पराजयात् विशेषानन्दं न प्राप्नोति स्म । अतः क्रीडायां एव तस्य निरासक्तिः जाता । गच्छता कालेन क्रीडा स्थगिता अपि तेन ।

महाराजस्य अनासक्तिप्रवृत्तिः मन्त्रिणि चिन्ताम् अजनयत् । सः किञ्चित् विचिन्त्य महाराजम् अवदत् -''महाराज! प्रसिद्धः आनन्दनामकः चतुरङ्गपटुः सर्वेषु देशेषु अटित्वा सर्वत्र विजयं प्राप्य इदानीं अस्मद्देशम् आगतवान् अस्ति । सः एतत्क्रीडासम्बन्धि मनोविज्ञानम् अपि जानाति इति श्रूयते । प्रसिद्धस्य चतुरङ्गपटोः भवतः एवम् अनासक्तिः किमर्थं जाता इति सः विमृश्य वक्तुम् अर्हेत् अपि । यदि भवतः अनुज्ञा स्यात् तर्हि अहं तम् अत्र आनाययेयम्'' इति ।

महाराजेन मन्त्रिणः सूचना अनुमता । मन्त्री सुबुद्धिः आनन्दं राजास्थानं प्रति निमन्त्रितवान् । तस्य पुरतः राज्ञः समस्या विस्तरेण निवेदिता । सर्वं सावधानं श्रुत्वा आनन्दः राजानम् उक्तवान् - ''प्रभो! भवान् यदि मया सह एकवारं चतुरङ्गक्रीडां क्रीडेत् तर्हि प्रायः अहं भवतः समस्यायाः परिहारं ज्ञातुं वक्तुं च शक्नुयाम्'' इति ।

मन्त्रिणः उपस्थितौ आनन्दस्य महाराजस्य च चतुरङ्गक्रीडा व्यवस्थापिता । राजा पूर्णेन अवधानेन क्रीडागतिं निश्चिनोति स्म । तस्यां क्रीडायाम् आनन्दः पराजितः अभवत् । एतस्मात् राजा नितरां सन्तुष्टः । आनन्दस्य पराजयात् यावान् आनन्दः प्राप्तः तावान् आनन्दः मन्त्रिणः पराजयात् न प्राप्तः आसीत् तेन । किन्तु एषः आनन्दः क्षणिकः आसीत् । यतः तदनन्तरकाले प्रवृत्तासु सर्वासु क्रीडासु महाराजस्य एव पराजयः जातः । अतः महाराजः पुनरपि हतोत्साहः जातः । क्रीडायां तस्य अभिरुचिः विनष्टा ।

परिस्थितिं समीकर्तुम् इच्छन् मन्त्री राज्ञः प्रतिनिधित्वेन क्रीडनम् आरब्धवान् । अल्पप्रयत्नेन एव सः आनन्दं पराजितवान् । अनन्तरकाले प्रवृत्तासु सर्वासु क्रीडासु अपि मन्त्री एव जितवान् । तथापि सः न विशेषसन्तुष्टः । आनन्दश्च न खिन्नः ।

क्रीडासमाप्तेः अनन्तरम् आनन्दः महाराजम् अवदत् - ''यदि अनुज्ञा स्यात् तर्हि भवतः समस्यायाः परिहारोपायम् अहं

वदेयम्'' इति ।

महाराजस्य अनुज्ञां प्राप्य सः अवदत् - ''सर्वासु अपि क्रीडासु क्रीडापटवः द्विप्रकारकम् आनन्दं प्राप्तुम् अर्हन्ति । एकविधः तु आनन्दः प्रतिस्पर्धिनः पराजयात् प्राप्यते । अपरविधश्च आनन्दः क्रीडामनोभावस्य आश्रयात् प्राप्यते । जय-पराजयविषये विशेषचिन्तनम् अकृत्वा क्रीडायां पूर्णमनसा प्रवर्तनम् एव क्रीडा-मनोभावः नाम । यः स्वजयात् आनन्दं प्राप्तुम् इच्छति सः सर्वदा अपि प्रतिस्पर्धिनः पराजयोपायम् एव चिन्तयन् भवति । क्रीडायां तस्य एकाग्रता विनश्यति । क्रीडायाम् अनवधानं यदा भवति तदा जयः सन्देहास्पदं भवेत् एव । जयात् प्राप्यमाणः आनन्दः मद्यात् प्राप्यमाणेन सन्तोषेण तुल्यः । सः क्रीडारतस्य विवेकं नाशयति । अतः सः जयात् आनन्दं प्राप्य उन्मत्तः इव व्यवहरति, पराजयं प्राप्य च खेदगर्ते पतति अपि ।''

''क्रीडामनोभावनया क्रीडन् क्रीडापटुः तु क्रीडायाम् एव विशेषावधानवान् भवति । जयपराजयादिविषये न चिन्तयति सः । प्रतिस्पर्धिनः क्रीडनशैलीं जागरूकतया अवलोकते सः । प्रतिस्पर्धिनः गुणांशाः के, अवगुणाः के इति चिन्तयन् सः स्वदौर्बल्यानां निवारणार्थं मार्गं चिन्तयति । पराजयात् सः हताशः न भवति । प्रतिस्पर्धी यदा जयं प्राप्नोति तदा एषः अपि तस्य आनन्दस्य सहभागी भवति । प्रतिस्पर्धिनं सहार्दम् अभिनन्द्य तस्य क्रीडाकौशलं



प्रशंसति सः । अग्रे उत्साहेन, जागरूकतया, अधिककौशलेन च क्रीडितुं सिद्धः भवति सः । अतः तस्य योग्यता सर्वदा विकसिता भवति ।

भवतः औदासीन्यस्य रहस्यम् अपि अत्रैव निहितम् अस्ति । भवतः आनन्दः जयकेन्द्रितः भवति । यदा मन्त्री जयं प्राप्नोति तदा भवान् क्रुद्धः भवति स्म खिन्नः वा । जयात् यः आनन्दः प्राप्यते तस्य अन्योऽपि स्वभावः अस्ति । पराजितः यदि दुःखितः, खिन्नः, म्लानमुखश्च भवति तर्हि विजयिनः महान् सन्तोषः भवति । यदि पराजितः पराजयानन्तरम् अपि खिन्नः म्लानमुखः वा न भवति, समभावं च वहति, तर्हि विजयिनः आनन्दः क्षणाभ्यन्तरे

नश्यति । मन्त्री बहुवारं पराजयं प्राप्य अपि न खिद्यते स्म, प्रत्युतः भवतः आनन्दस्य सहभागी भवति स्म । अतः एव जयं प्राप्य अपि भवता उदासीनता प्राप्यते स्म ।''

'आनन्दः युक्तम् एव वदन् अस्ति । मम हृदये स्थितम् अन्धकारं दूरीकुर्वन् अस्ति सः । मम औदासीन्यस्य कारणम् अपि यथायोग्यं चिन्तितं तेन' इति चिन्तयन् महाराजः आनन्दस्य मनोविश्लेषणक्रम-विषये नितरां सन्तुष्टः । एतस्य सर्वस्य श्रवणस्य अनन्तरं तस्य मनसि कश्चन प्रश्नः उदितः । सः अपृच्छत् - ''भवान् श्रेष्ठः क्रीडापटुः इत्यत्र नास्ति एव सन्देहः । तथापि प्रथमवारं भवता किमर्थं पराजयः प्राप्तः ?'' इति ।

तदा आनन्दः मन्दमासपूर्वकम् अवदत् - ''महाराज ! भवान् अपि श्रेष्ठः क्रीडापटुः एव । भवतः क्रीडनक्रमे न सन्ति दोषाः । माम् अपि पराजेतुं भवतः सामर्थ्यम् अस्ति एव । अतः मया प्रथमवारं पराजयः प्राप्तः । किन्तु अहं ततः निराशः न जातः । अहं भवतः क्रीडनकौशलं, क्रीडानीतिं च तावता अवगतवान् आसम् । अतः द्वितीयवारं क्रीडनसमये मया मम क्रीडनरीतिः परिवर्तिता । किन्तु भवता मम क्रीडनरीतिः जागरूकतया न परिलक्षिता । अतः भवतः क्रीडने परिष्कारः न जातः एव । ततश्च बहुवारं पराजयः प्राप्तः भवता'' इति ।

''एतादृशं क्रीडापटुत्वं मनोविश्लेषण-कौशलं च कुतः प्राप्तं भवता ?'' इति कुतूहलेन पृष्टवान् महाराजः ।

आनन्दः मन्त्रिणं सुबुद्धिं दर्शयन् - ''एतत्सर्वं मया मम पितुः सकाशात् अधिगतं महाप्रभो ! मम पिता न अन्यः, अपि भवतः मन्त्री सुबुद्धिः एव' इति विनयेन अवदत् ।

एतावत् उक्त्वा झटिति उत्थाय महाराजं साष्टाङ्गं प्रणम्य क्षमां याचितवान् आनन्दः ।

पुनरपि चतुरङ्गक्रीडायां महाराजस्य आसक्तिः उत्पन्ना । इदानीं जयपराजयविषये सः विशेषचिन्तनं न करोति । क्रीडा-मनोभावनया क्रीडन् सः सर्वदा आनन्दं प्राप्नोति ।



# क्वचित् कुल्यायतेऽपि कावेरी

*वर्णनम्* - **जयन्ती महालिङ्गम्**
*चित्रम्* - **गौतमसेनः**




शिवसमुद्रतः अग्रे गता कवेरी अर्कावती-नामिकया नद्या कनकपुरप्रदेशे मिलति । एषः प्रदेशः बेङ्गलूरुतः ११३ कि.मी.दूरे अस्ति । अर्कावती नन्दिदुर्गपर्वतप्रदेशे उद्भवति । बेङ्गलूरु-नगरस्य जलं व्यवस्थापयितुं चामराजनगरप्रदेशे जलबन्धः निर्मितः अस्ति । अर्कावती-कावेर्योः सङ्गमस्थले घनारण्यं प्रसृतम् अस्ति । एतत्प्रदेशे कोषकीटाः प्राधान्येन पाल्यन्ते । (कौशेयतन्तवः ततः निर्मीयन्ते) वेणुनिर्मितासु सुविशालस्थालिकासु एते कोषकीटाः पाल्यन्ते ।

अत्र कावेरी शिलामयभूमौ वक्रगत्या प्रवहति । अक्षिनिमीलनक्रीडामग्ना बालिका इव दृश्यते सा । विविधाकारिकाणां शिलानां मध्ये रजतरेखा इव प्रवहति कावेरी । क्वचित् गभीरखाते विलुप्ता सा किञ्चिदग्रे अकस्मात् दृष्टिगोचरतां याति । कावेरी इव एव अत्रत्या शिलामयी भूमिः अपि द्रष्टॄणां चित्तम् आकर्णति एव । अत्र नीलाः, कृष्णाः, श्वेताः, पाटलाः च शिलाः दृश्यन्ते । तत्कारणतः कावेरीजले अपि विविधवर्णाः दृश्यते इव तत्र तत्र । शिलानाम् आकारः अपि अत्र विलक्षणः । काश्चन गजपादाकारिकाः, अन्याः काश्चन गोलाकाराः, इतराः काश्चन लिङ्गाकाराः । तासां मध्ये दर्पणवत् स्वच्छा कावेरी प्रवहति ।

वेगेन गच्छन्ती कावेरी शिलानां मध्ये रुद्धगतिः सती ह्रदं निर्माति । स च ह्रदः 'हन्नेरडुचक्र'नाम्ना निर्दिश्यते । अस्मिन् ह्रदे पातितं यत्किमपि वस्तु द्वादशवारं भ्रमिं प्राप्य तलं प्राप्नोति इति जनाः वदन्ति ।

अर्कावतीसङ्गमतः ५ कि.मी. दूरे सुप्रसिद्धं 'मेकेदाटु'स्थलम् अस्ति । यत्र अजा सकृत् वेगेन कूर्दनेन अपरतीरं प्राप्तुं शक्नोति तदेव स्थलम् 'मेकेदाटु' नाम ।

इतः अग्रे कावेरी दक्षिणदिशि प्रवहति । नदीप्रवाहम् अवलम्ब्य कर्णाटकीययोः मैसूरु-बेङ्गलूरु-जनपदयोः विभागः कृतः अस्ति । तमिळुनाडुराज्यस्य धर्मपुरीजनपदस्य सीमाम् अपि एषा निर्दिशति क्वचित् । अग्रे एषा मलगिरि-पर्वतश्रेण्यां कूर्दन्ती पतन्ती च अग्रे गच्छति । ३० कि.मी.दूरे तमिळुनाडुराज्ये तोप्पूरुपर्वतप्रदेशे एषा होगेनकल्जलपातं

**मेके दाटु**





होगेनकल्जलपातः

निर्माति । 'होगेनकल्'पदस्य अर्थः 'धूमनिस्सारिका शिला' इति । नदी अत्र द्विधा विभक्ता भवति । पश्चिमधारा २२ मीटरौन्नत्यात् पतति । शिलामय-भूमौ पतितं जलं बिन्दुरूपेण सर्वत्र विकिरति । तत् जलावरणं दूरात् दृष्टं चेत् धूमावरणम् इव भासते ।

पूर्वधारायाः भागद्वयं भवति । एकः भागः मेकेदाटुसदृशेषु स्थलेषु प्रवहति । एतत् स्थलं ज्ञानतीर्थनाम्ना निर्दिश्यते । अत्र स्नानं पुण्यप्रदं भावयन्ति जनाः । यात्रिणां सौकर्याय अत्र सोपानानि निर्माय शृङ्खलाम् अपि स्थापितवन्तः सन्ति सर्वकारीयाः । 'आडिपदिनाट्टु'(अगस्ट्-१८)दिने 'ऐपासि'पर्वदिने (अक्टोबर्-नवम्बर्मासयोः) च अत्र स्नानमेला प्रवर्तते । ऐपासिपर्व समग्रे तमिळुनाडुराज्ये जनप्रियम् अस्ति । तत्पर्वदिने जनाः सपरिवारम् अत्र उपस्थिताः भवन्ति । नद्यां स्नात्वा नदीं पूजयन्ति ते । भोजनरूपेण दध्यन्नं, चित्रान्नं, निम्बूकान्नम्, आम्लान्नम् इत्यादिकं सेव्यते तैः ।

कावेरीतीरे देशेश्वरमन्दिरम् अस्ति । पूर्वं कदाचित् महर्षिः अगस्त्यः अत्र कावेर्याः पूजां कृतवान् आसीत् इति श्रूयते ।

होगेनकलप्रदेशे नदीक्रमणार्थं विहारार्थं च 'हरिगोलु'नामकस्य उडुपविशेषस्य उपयोगः क्रियते । वेत्रनिर्मितः विशालकण्डोलः एव 'हरिगोलु' इति वक्तुं शक्यः । सप्तजनाः अत्र उपविश्य युगपत् एव प्रयाणं कर्तुं शक्नुवन्ति । यात्रिकाणां विहारार्थं नदीक्रमणार्थं च अपेक्षिताः हरिगोलु-उडुपाः अत्र अनेकसङ्ख्यया भवन्ति । लघुनः नौदण्डस्य साहाय्येन नाविकाः उडुपं लीलया चालयन्ति । वस्तुतः अत्र उडुपचालने महत् कौशलम् आवश्यकम् । यतः अत्र प्रवाहस्य वेगः अधिकः । गभीरता अपि अधिका । नद्याः एकस्मिन् तीरे महाशिलाः भवन्ति । अपरत्र घनारण्यं भवति ।

डोम्बतरुण्याः दीर्घदण्ड कूर्दनम्





प्रपातात् अग्रे चिन्नारनामिका काचित् लघुनदी कावेर्या मिलति । चिन्नारनद्याः अपरं नाम सनत्कुमारनदी इति । तस्याः जन्म यत्र भवति तत्र महर्षिः सनत्कुमारः कुण्डं निर्मितवान् आसीत् इति कथा श्रूयते ।

एतत्प्रदेशे घटिता काचित् जानपदकथा एवं श्रूयते - एकदा इरुबलनायकः नाम कश्चन धीवरनायकः नद्याः वामतटे उपविष्टवान् आसीत् । नद्याः दक्षिणतटे डोम्बकुलीया काचित् तरुणी दीर्घवेणुदण्डस्य साहाय्येन दीर्घकूर्दनादिचमत्कारान् प्रदर्शयन्ती आसीत् । सः इरुबलः ताम् उच्चस्वरेण उक्तवान्- ''यदि सामर्थ्यं स्यात् तर्हि दीर्घदण्डसाहाय्येन एतत्तीरम् आगच्छतु तावत्'' इति । 'पश्यतु तावत् । एषाऽहम् आगता' इति वदन्ती सा तरुणी दण्डसाहाय्येन उत्कूर्द्य इरुबलस्य अङ्के एव पतितवती एव ! मैसूरुराजेन एषा घटना यदा श्रुता तदा सः क्रुद्धः जातः । पवित्रे तीर्थस्थाने एतादृश्यः दुश्चेष्टाः न शोभन्ते इति चिन्तयित्वा सः इरुबलनायकं कठोरतया दण्डितवान् ।

*हरिगोलु*

होगेनकल्परिसरे मत्स्यग्रहणम् अपि आनन्दाय एव । अत्र 'माहशीर'जातीयाः मत्स्याः लभ्यन्ते । माहशीरजातीयाः मत्स्याः क्वचित् ५० किलो-भारमिताः अपि भवन्ति । पूर्वम् एते मत्स्याः अत्र गणरूपेण सञ्चरन्ति स्म इति श्रूयते । किन्तु इदानीम् प्रदूषणकारणतः तेषां सङ्ख्ययां विशेषह्रासः दृश्यते ।



*माहशीरजातीयः मत्स्यः*

इतः अग्रे दक्षिणगामिनी कावेरी स्वविस्तारं वर्धयति । होगेनकल्तः ५० कि,मी. दूरे सा यत्र तमिळुनाडुराज्यं प्रविशति तत्र मेट्टूरुजलबन्धः निर्मितः अस्ति । प्रतिभाशाली आंग्लेयः अभियन्ता आर्थर् काटनः १८३४ तमे वर्षे एतस्य जलबन्धस्य योजनां रचितवान् । तस्य योजना १९१० तमे वर्षे कार्यरूपतां प्राप्नोत् । जलबन्धनिर्माणकार्यं तु १९२५ तमे वर्षे आरब्धम् । षड्वर्षाभ्यन्तरे जलबन्धः निर्मितः जातः ।



मेट्टूरुबन्धः १५९० मीटर्दीर्घः, ५१ मीटर्विस्तृतः, ६४.२ मीटर्-उन्नतः च अस्ति । यदा एषः निर्मितः तत्काले अतिविशालजलबन्धत्वेन ख्यातिः आसीत् एतस्य । ६० वर्ग कि. मी. - विस्तृतं जलाशयं निर्मितवान् आसीत् एषः



*मेट्टूरुबन्धः*

जलबन्धः । मानवनिर्मितजलाशयेषु एषः एव विशालतमः आसीत् तदा । गवर्नर् जान् स्टैन्लीवर्यस्य स्मरणार्थम् एतस्य नाम 'स्टैन्ली'जलाशयत्वेन निर्दिष्टम् । बन्धात् अधोभागे स्थितं विद्युदागारं प्रतिवर्षं ३६००० किलोव्याट्विद्युतम् उत्पादयति ।

वृष्टेः अभावे क्वचित् जलाशयस्य जलस्य गभीरता अष्टमीटर्मात्रमिता अपि भवति । १९५२ तमे वर्षे एवं जातम् आसीत् । १९७५ तमे वर्षे जलाशयः पूर्णतः शुष्कतां गतः आसीत् अपि । तदा पाण्ड्यकालिकम् एकं मन्दिरं दृष्टिगोचरं जातम् आसीत् ।

इतः अग्रे कावेरी सेलम्-पेरियार्जनपदयोः विभागरेखायमाना प्रवहति । उत्तरदिक्तः शिवरायपर्वतश्रेण्याम् उत्पद्य सेलम्नगरे प्रवहन्ती तिरुमणिमुत्तार्नदी नामक्कल्प्रदेशे कावेर्या मिलति । 'मुत्तार्' इत्येतस्य तमिळुपदस्य अर्थः 'मुक्ता' इति । प्रायः पूर्वम् एतस्याः तीरे मुक्तामणयः प्राप्यन्ते स्म । सेलम्नगरस्थे मुख्यशिवमन्दिरे स्थितायाः देव्याः आभरणे दृश्यमानः विशालः मुक्तामणिः एतया तिरुमणिमुत्तार्नद्या एव दत्तः इति कथा श्रूयते । किन्तु अद्य सा नदी महतीं दुर्दशां गता अस्ति । नदीप्रवाहस्य न विशेषसामर्थ्यम् । नगरस्य यन्त्रागाराणां च मलिनजलम् एतस्याः प्रवाहं मलिनीकरोति । अतः वर्षाकालमात्रे नद्यां प्रवाहः दृश्यते । सोऽपि मलिनः दुर्गन्धपूर्णः च ।

सेलम्नगरी वस्त्रनिर्माणार्थं स्टेन्लैस्स्टील्निर्माणार्थं च प्रसिद्धा । अत्र निर्मितानि आच्छादकानि वेष्ट्यः च समग्रे दक्षिणभारते प्रसिद्धानि । सेलम्नगर्याः रक्षकत्वेन स्थितायां शिवरायपर्वतश्रेण्यां येर्काड्नामकं रमणीयं पर्यटनकेन्द्रम् अस्ति । ग्रीष्मकाले पर्वतमूलभागे घोरतापः यदा बाधते, तस्मिन् एव समये येर्काड्प्रदेशे ऊर्णवस्त्राणि धर्तव्यानि भवन्ति शैत्यनिवारणार्थम् ।



# तिस्रः यक्षकन्यकाः त्रीणि वराणि च

रामः सोमः च एकस्य एव ग्रामस्य निवासिनौ, प्रतिवेशिनौ चापि । रामः परिश्रमशीलः । सः श्रद्धया कृषिं करोति स्म । उदरपोषणानन्तरं यत् धान्यम् अवशिष्यते तस्य विक्रयणतः धनं प्राप्य सः एकं लघुगृहम् अपि निर्मितवान् आसीत् । सर्वदा जागरूकतया व्ययं कुर्वन् सः सरलजीवनेन तृप्त्या दिनानि यापयति स्म ।

किन्तु सोमः न तादृशः । परिश्रमं सर्वथा न इच्छति सः । आडम्बरप्रियः सः विना कारणं बहुधा धनव्ययं करोति स्म । अतः जीवननिर्वहणार्थं तेन ऋणं स्वीकरणीयं भवति स्म । ऋणभारः यदा अत्यधिकः जातः तदा सोमः स्वभूमिं विक्रीय ऋणभारव्यवहारं समापितवान् । गृहे तस्य वृद्धा माता अस्वस्था आसीत् । पत्नी धनाभावक्लेशं सोढुम् अशक्नुवती पतिं पुनः पुनः तर्जयति स्म । अतः सोमस्य जीवनं दुःखमयम् अव्यवस्थितं च आसीत् । सोमः तत्पत्नी च रामस्य सुखजीवनं दृष्ट्वा असूयां प्राप्नुतः स्म । किन्तु सोमस्य परिवारस्य विषये रामस्य तत्पत्न्याः च कोऽपि असन्तोषः न आसीत् ।

रामः सोमः च मासे एकवारं मिलित्वा एव नगरं गच्छतः स्म । मासार्थं यावत् आवश्यकं तावत् वस्तुजातं स्वीकृत्य तौ प्रत्यागच्छतः स्म । प्रतिमासम् अपि तौ अरण्यमार्गम् अतिक्रम्य गत्वा तेनैव मार्गेण प्रत्यागच्छतः स्म ।

एकदा तौ गृहार्थम् आवश्यकानि वस्तूनि क्रीत्वा स्यूते पूरयित्वा अरण्यमार्गेण प्रत्यागच्छन्तौ आस्ताम् । मध्येमार्गं वार्तालापसमये रामः चिन्तामिश्रितस्वरेण



रामः सोमम् अवदत् - ''देशस्य विषये काऽपि चिन्ता एव नास्ति भवतः । आस्तां तावत् सा कथा । वर्षद्वयतः इन्द्रदेवः असमद्ग्रामविषये किमर्थं वा कुपितः ? किमर्थं वर्षद्वयतः अस्माकं ग्रामे वृष्टिः एव नास्ति ?'' इति ।

सोमः उपहासपूर्वकम् अवदत् - ''भवतः तु कृषिभूमिः अस्ति । अतः वृष्टिविषये चिन्ता भवतः । किन्तु मम तु नास्ति कृषिभूमिः । अतः वृष्टिचिन्ता अपि नास्ति । एतस्मिन् ग्रामे वृष्टिः न भवति चेत् यत्र वृष्टिः भवति तं ग्रामं गत्वा कस्यचित् क्षेत्रे कार्यं करिष्यामि'' इति ।

यदा तौ एवं वार्तालापं कुर्वन्तौ अरण्य-मार्गेण गच्छन्तौ आस्तां तदा पृष्ठभागतः सोमस्य मित्रस्य शकटम् आगतम् । सः सोमं दृष्ट्वा - ''भोः, शकटे एकस्य उपवेशनार्थं स्थलम् अस्ति । अतः भवान् आगत्य उपविशतु'' इति असूचयत् ।

'मित्र ! क्षन्तव्यः अहम्' इति रामम् उक्त्वा शकटम् आरूढवान् सोमः ।

रामः एकाकी अरण्यमार्गेण गमनम् अनुवर्तितवान् । किञ्चित् अग्रे मार्गे पतितायाः वृक्षशाखायाः घट्टनतः सः अपतत् । तस्य वस्तूनि सर्वाणि इतस्ततः विकीर्णानि । सः मूर्च्छां गतः ।

गोधूलिवेलायां सः सचेतनः जातः । इतस्ततः विकीर्णानि वस्तूनि सः एकत्रीकृत्य स्यूते पूरितवान् । तदवसरे तेन एकं प्राचीनं ताम्रमयम् अङ्गुलीयकं प्राप्तम् । सः सन्तोषेण तत् अङ्गुलौ धृत्वा गमनम् अनुवर्तितवान् ।

अकस्मात् तस्य दृष्टिः वृक्षाणां मध्ये

अवदत् - ''अचिरात् एव राज्ञ्याः चिरवियोगं प्राप्य राजा नितरां खिन्नः अस्ति । एतस्मिन् एव समये प्रतिवेशिराजः आक्रमणं घोषितवान् अस्ति । अतः चिन्ताग्रस्तः अस्ति राजा'' इति ।

एतत् श्रुत्वा हसन् उक्तवान् सोमः - ''राज्ञः स्थितिः या काऽपि भवति चेदपि ततः अस्माकं कः लाभः ? अस्मदीयानि वस्तूनि अस्माभिः नेतव्यानि भवन्ति एव । एवं स्थिते, किं राज्ञः स्थितेः चिन्तनेन ?'' इति ।

रामः प्रतिवचनं किमपि न उक्तवान् । मौनेन गमनम् अनुवर्तितवान् सः ।

यद्यपि सः श्रावणमासः, तथापि आकाशे मेघाः नाम्ना अपि न दृश्यन्ते स्म । दिनस्य तृतीये अपि प्रहरे घोरः आतपः बाधते स्म ।

विराजमानस्य प्रासादस्य उपरि पतिता । सः तम् अरण्यप्रदेशं सम्यक् जानाति स्म । वृक्षेभ्यः ऋते किमपि भवनं तेन इतःपूर्वं न दृष्टम् आसीत् तत्र ।

अपूर्वं तत् भवनं दृष्ट्वा सः आश्चर्येण स्तब्धः । 'एतत् कथं दृष्टिगोचरं जातम्' इति तेन न अवगतम् । सः तदेव भवनं निर्निमेषं दृष्टवान् । अत्रान्तरे यस्याम् अङ्गुल्याम् अङ्गुलीयकं धृतम् आसीत् तत्र अल्पा वेदना तेन अनुभूता । अतः सः अङ्गुलीयकं तस्याः अङ्गुलीतः अपनीय अन्यस्याम् अङ्गुल्याम् धृतवान् । तत्समनन्तरम् एव तत् भवनम् अदृश्यतां गतम् । तदा तस्य आश्चर्यस्य सीमा एव न आसीत् । सः पुनरपि तत् पूर्वतनाङ्गुलौ एव धृतवान् । इदानीं पुनरपि तत् भवनं दृष्टिगोचरं जातम् ।

'अमुकाङ्गुल्याम् अङ्गुलीयकस्य धरणतः एव एतत् भवनं दृष्टिगोचरं भवति' इति अवगतवान् सः । भव्यभवनस्य अन्तः गत्वा द्रष्टव्यम् इति तस्य मनसि इच्छा उत्पन्ना । सः भवनस्य मुख्यद्वारस्य समीपं गतवान् ।

भवनस्य प्रथमप्रकोष्ठे तिस्रः यक्षकन्यकाः उपविश्य हसन्त्यः वार्तालापमग्नाः आसन् । अभिमुखम् आगच्छन्तं कञ्चित् मानवं दृष्ट्वा ताः पृष्टवत्यः - ''भोः, कः भवान् ? किम् अपेक्ष्यते भवता ?'' इति ।

रामः स्वनामधामादिकम् उक्त्वा - ''एतस्य भवनस्य बाह्यसौन्दर्यं दृष्ट्वा आकृष्टः अहम् एतस्य अन्तर्भागस्य सौन्दर्यम् अपि द्रष्टुम् अत्र उपस्थितः अस्मि'' इति अवदत् ।

''अत्र मानवानां प्रवेशः निषिद्धः । अतः



प्रतिगच्छतु भवान्'' इति उक्तवती एका यक्षकन्यका ।

''यदि भवान् विना विरोधं प्रतिगच्छेत् तर्हि वयं तिस्रः अपि भवते एकैकं वरं दद्याम'' इति उक्तवती अपरा ।

''अस्माकं नाम - उदया, सन्ध्या, निशा चेति । अस्मासु अन्यतमायाः नाम सप्तवारं जपित्वा अपेक्षितम् अभियाच्यते चेत् तत् सिद्धं भविष्यति'' इति उक्तवती तृतीया यक्ष-कन्यका ।

रामः उदयायाः नाम सप्तवारं जपित्वा उक्तवान् - ''अस्माकं देशं वशीकर्तुं यः शत्रुः उपस्थितः अस्ति तस्य मनःपरिवर्तनं भवेत् । सः सन्धिप्रस्तावम् अङ्गीकुर्यात्'' इति ।

अनन्तरं सः सन्ध्यायाः नाम सप्तवारं



जपित्वा अवदत् - ''अस्माकं ग्रामे इतःपरम् अतिवृष्टिः अनावृष्टिः वा न भवेत् । सदा सम्पत्समृद्धिः भवतु ग्रामे'' इति ।

निशायाः नाम सप्तवारं जपित्वा सः अवदत् - ''परिश्रमेण यावत् प्राप्यते तावता एव मम मत्परिवारस्य च सन्तुष्टिः भवतु'' इति ।

ततः सः तासाम् अनुज्ञां प्राप्य ग्रामं प्रत्यागतवान् । यावत् सः ग्रामसीमां प्राप्तवान् तावता राजभटैः क्रियमाणं सडिण्डिमोद्घोषणं श्रुतं तेन - ''भो भो बान्धवाः । शत्रुराजः सन्धिम् अङ्गीकृतवान् अस्ति । अतः युद्ध-भीतिः अपगता अस्ति'' इति ।

एतत् उद्घोषणं श्रुत्वा रामः तृप्त्या निश्श्वसितवान् । प्रसन्नमुखमुद्रया यावत् सः गृहस्य अन्तः पदं स्थापितवान् तावता मेघगर्जनं श्रुतम् । अचिरात् एव वृष्टिः अपि आरब्धा । रामः पत्नीम् अपूर्वाङ्गुलीयकवार्तां श्रावयित्वा - ''शत्रुराजेन कृतः सन्धिप्रस्तावः, ग्रामे जाता वृष्टिः च तस्य अङ्गुलीयकस्य एव प्रभावतः प्रवृत्तः । अतः एतं दिव्याङ्गुलीयकं श्रद्धया पूजास्थाने रक्षतु'' इति उक्त्वा अङ्गुलीतः अङ्गुलीयकम् अपनीय पत्न्यै दत्तवान् । तत् श्रद्धया स्वीकृत्य पूजागृहे स्थापितवती सा ।

रामस्य ध्वनिं श्रुत्वा सोमः - 'प्रत्यागमने एतावान् विलम्बः किमर्थं जातः ?' इति प्रष्टुम् इच्छन् रामगृहसमीपम् आगतवान् । अङ्गुलीयकविषयकः रामस्य तत्पत्न्याः च वार्तालापः तेन समग्रतया श्रुतः । अतः सः रामं किमपि अनुक्त्वा मौनेन गृहं प्रत्यागतवान् । पत्नीम् आहूय अङ्गुलीयकवार्तां निवेद्य - ''कथञ्चित् उपायेन तत् महिमान्वितम् अङ्गुलीयकं तस्मात् गृहात् चोरितं चेत् अहम् अपि ताभ्यः यक्षकन्यकाभ्यः वराणि प्राप्तुं शक्नुयाम्'' इति अवदत् ।

''मम स्वास्थ्यं यथा सम्यक् स्यात् तथा प्रार्थना करणीया एकस्य वरस्य साहाय्येन'' इति उक्तवती सोमस्य वृद्धा माता ।

''मम निमित्तम् उत्कृष्टम् एकं भवनं प्रार्थनीयं भवता'' इति उत्साहेन उक्तवती तस्य पत्नी ।

''अस्तु तावत् । सर्वं प्रार्थयाम । आदौ तत् अङ्गुलीयकम् आनीयताम्'' इति पत्नीं सूचितवान् सोमः ।

सोमस्य पत्नी गृहस्य पृष्ठभागे स्थितानि द्वित्राणि पुष्पाणि अवचित्य पुष्पदानव्याजेन

रामस्य गृहं प्रति प्रस्थितवती ।

तत्समये रामः कूपस्य पार्श्वे स्नानं कुर्वन् आसीत् । तत्पत्नी तु पाककार्ये निरता आसीत् ।

''भगिनि ! अद्य शुक्रवासरः खलु ? अतः पूजार्थं दातुं पुष्पाणि आनीतवती अस्मि'' इति उच्चस्वरेण उक्तवती सोमस्य पत्नी ।

''महान् सन्तोषः । तानि पूजागृहे स्थापयतु । अहं पाकव्यग्रा अस्मि'' इति उक्तवती रामस्य पत्नी । सोमस्य पत्नी पूजागृहं प्रविश्य पुष्पाणि स्थापयित्वा अङ्गुलीयकं गृहीत्वा मौनेन ततः निर्गतवती ।

रामस्य मुखात् यथा श्रुतं तथैव कृतवान् सोमः । सोऽपि तस्मिन् एव स्थाने तादृशम् एव भवनम् अपश्यत् । यदा सः भवनस्य अन्तः गन्तुम् उद्युक्तः तदा यक्षकन्यकाः तमपि आगमनकारणं पृष्टवत्यः ।

''अहं त्रीणि वराणि प्राप्तुम् आगतः अस्मि'' इति उक्तवान् सोमः । यक्षकन्यकाः सोमस्य चिन्तनरीतिं स्वार्थभावनां च अवगतवत्यः । तासु एका उक्तवती - ''वयं वरं दास्यामः । किन्तु भवता तत् ताम्राङ्गुलीयकं प्रत्यर्पणीयम्'' इति ।

''अहं गृहं गत्वा मात्रा पत्न्या च सह मिलित्वा वरं प्रार्थयितुम् इच्छामि । वरप्राप्तिक्रमः सः एव खलु ? एकैकस्याः अपि नाम सप्तवारं जपित्वा वरम् अभ्यर्थनीयम् । एवं ननु ?'' इति उत्साहेन अवदत् सोमः ।

''आम् । तथैव सर्वम् अपि'' इति उक्तवत्यः यक्षकन्यकाः ।



''एवं तर्हि मम अभीष्टं सिद्धम् । अहो, धन्योऽहम्'' इति वदन् सोमः ताम्राङ्गुलीयकं ताभ्यः प्रत्यर्पितवान् । अपरक्षणे एव ताः, तत् भवनं च अदृश्यं जातम् ।

महता सन्तोषेण गृहं प्रत्यागतवान् सोमः । तस्य माता पत्नी च अत्यासक्त्या तस्य आगमनं प्रतीक्षमाणे आस्ताम् । गृहं प्राप्य सः प्रवृत्तं सर्वं ते निवेदितवान् । त्रयः अपि एकैकस्याः यक्षकन्यकायाः नाम सप्तवारं जपित्वा 'किं प्रार्थनीयम् ?' इति चिन्तनम् आरब्धवन्तः ।

''शतवर्षपर्यन्तं जीवनं याचिष्यामि'' इति उक्तवती माता ।

''किं तेन ? स्वास्थ्यस्य अभावे दीर्घायुस्तः कः लाभः ? अतः यावत् जीवामि तावत् मम स्वास्थ्यम् उत्तमं भवतु इति याचतु'' इति



*युवावस्थायां यः कामनाभिः मुक्तः भवति सः एव 'शान्तः' इति उच्यते । प्राणशक्तौ क्षीणायां (वार्धक्ये) यः शान्तः भवति ततः किं प्रयोजनम् ?*

*- पञ्चतन्त्रम्*

सूचितवती स्नुषा ।

वृद्धा माता तथैव याचनां कृतवती । अपरक्षणे सा स्वस्था सती शय्यायाम् उपविष्टवती । एतत् दृष्ट्वा सोमस्य पत्नी खेदेन - ''हा हन्त ! किम् एतत् प्रवृत्तम् ? अहं वासार्थम् उत्तमं भवनं, सेवकान्, सुवर्णरजताद्याभरणानि, अष्टैश्वर्यं च याचितुम् इच्छामि स्म । किन्तु अविवेकिनी एषा स्वास्थ्यप्रार्थनया सर्वं नाशितवती । हन्त ! सर्वं विनष्टम् । भवत्याः अस्वास्थ्यम् एव वरम् अभविष्यत्'' इति उक्तवती ।

स्वस्थां मातरं दृष्ट्वा सन्तुष्टः सोमः पत्न्याः असन्तोषवचनानि श्रुत्वा कोपेन - ''मम मात्रा स्वास्थ्यं प्राप्तं चेत् भवत्याः कोपः किमर्थम् ? ततः किम् अस्माकं उपरि आकाशः पतेत् ? अस्मत्प्रतिवेशी यदि कोट्यधिपतिः भवेत् तर्हि आजीवनं रोदनं करणीयं भवेत् भवत्या'' इति अवदत् ।

तस्य वचनस्य समाप्तेः अनुक्षणम् एव सोमस्य गृहस्य छदिः पतिता । लघुभूकम्पः जातः इव । क्षणाभ्यन्तरे सोमस्य गृहं पूर्णतः विनिष्टं जातम् । त्रयः अपि भीत्या मार्गम् आगत्य स्थितवन्तः ।

रामस्य गृहं यत्र आसीत् तत्र अपरक्षणे एव प्रासादसदृशम् एकं भवनं निर्मितम् अभवत् । तत् विविधैः आभरणैः सुवर्ण-नाणकैः च पूर्णम् अपि अभवत् । सोमस्य पत्नी सर्वं दृष्ट्वा ईर्ष्यया अश्रूणि स्रावितवती ।

स्वार्थभावनया, ईर्ष्यया, कोपेन च यत् सोमादिभिः उक्तं तदेव प्रवृत्तम् आसीत् । अतः यक्षकन्यकानां वराणि शापाय एव जातानि । 'परोत्कर्षं ये न सहन्ते तेषाम् एतादृशी एव दुर्गतिः भवति' इति स्वानुभवात् अवगतवान् सोमः । अतः उत्तमजीवनस्य आरम्भार्थं सः पत्न्या मात्रा च सह ग्रामान्तरं प्रति प्रस्थितवान् ।



४९. विश्वरूपप्रदर्शनम्

# महाभारतम्

परशुरामस्य उपदेशस्य अनन्तरं कण्वः उक्तवान् - ''दुर्योधन ! सन्धेः अङ्गीकारः सर्वदृष्ट्या अपि हितकरः । तेनैव भवतः शक्तिः वर्धिष्यते । समस्तं भूमण्डलं शासनीयं चेत् पाण्डवानां साहाय्यम् अनिवार्यम् । अहम् एकः एव महाशक्तिशाली इति भवान् यत् चिन्तयति तत् सर्वथा मिथ्या । एतत् स्पष्टतया अवगमयितुम् अहं मातलेः कथां श्रावयामि -

मातलिः देवेन्द्रस्य सारथिः । मातलेः पुत्री गुणकेशी अपूर्वसुन्दरी । तस्याः सौन्दर्यस्य अनुगुणः वरः भूलोके देवलोके वा कोऽपि न प्राप्तः । अतः योग्यस्य वरस्य अन्वेषणार्थं मातलिः नागलोकं प्रति प्रस्थितवान् । मध्येमार्गं नारदः मिलितः । त्रयः अपि सम्भूय नागलोकं गतवन्तः ।

वरुणः तान् आदरेण सत्कृतवान्, तेषाम् आगमनकारणं ज्ञात्वा नागलोके भ्रमणार्थम् अनुज्ञां दत्तवान् च । बहुधा अटनानन्तरं भोगवतीपुरे सुन्दरः योग्यः वरः मातलिना दृष्टः । तस्य नाम सुमुखः इति ।

''एषः गुणकेश्याः अनुरूपः वरः । अतः सः एतं विवाहप्रस्तावं यथा अङ्गीकुर्यात् तथा करोतु कृपया'' इति नारदं सानुरोधं प्रार्थितवान् मातलिः ।

नारदः सुमुखस्य पितामहस्य आर्यकस्य समीपं मातलिं नीत्वा परिचयं कारितवान्, तदीयाम् अपेक्षां प्रकटितवान् च । आर्यकः एतं प्रस्तावं श्रुत्वा सन्तुष्टः । तथापि सः स्वस्य असहायकतां प्रदर्शयन् उक्तवान् -





''ऋषिवर ! सद्यःकाले गरुडेन मम पुत्रः संहृतः । 'मासाभ्यन्तरे पौत्रं सुमुखम् अपि खादिष्यामि' इति भयवचनम् उक्त्वा गतः अस्ति सः । एतस्मात् वयं सर्वे भीताः स्मः । एतादृशे काले विवाहः कथं वा अङ्गीकर्तुं शक्येत ?'' इति ।

एतत् श्रुत्वा मातलिः क्षणकालं विचिन्त्य अवदत् - ''महाशय ! भवान् पौत्रं सुमुखम् आवाभ्यां सह इन्द्रलोकं प्रेषयतु । वयं कमपि उपायं कृत्वा सुमुखस्य रक्षणं चिन्तयिष्यामः'' इति ।

आर्यकः मातलेः प्रस्तावम् अङ्गीकृतवान् । मातलिः नारदः च सुमुखेन सह देवेन्द्रसमीपं गतवन्तौ । तत्समये विष्णुः देवेन्द्रेण सह वार्तालापं कुर्वन् आसीत् । मातलिः स्वस्य समस्यां निवेदितवान् । तत् श्रुत्वा विष्णुः उक्तवान् - ''सुमुखाय अमृतं दत्त्वा तमपि अमरं करोतु । एतेन समस्या परिहृता भविष्यति'' इति ।

'एवं कृतं चेत् गरुडः क्रुद्धः भवेत्' इति चिन्तितवान् इन्द्रः विष्णुम् अवदत् - ''भवान् एव स्वहस्तेन सुमुखाय अमृतं ददातु कृपया'' इति ।

तदा विष्णुः - ''देवेन्द्र ! भवान् अस्ति सर्वलोकानाम् अधिपतिः । कस्मात् भयं भवतः ? निर्भयः सन् एतत् कार्यं समापयतु भवान्'' इति उक्तवान् ।

देवेन्द्रः सुमुखाय अमृतं न दत्तवान्, किन्तु सुमुखं तु दीर्घायुष्मन्तं कृतवान् । एतस्मात् मरणभीतिः तु अपगता । अतः सुमुख-गुणकेश्योः विवाहः सम्पन्नः । पत्न्या सह सुखेन वासम् आरब्धवान् सुमुखः ।

सुमुखस्य दीर्घायुष्मत्त्वं, विवाहवार्तां च श्रुत्वा गरुडः नितरां क्रुद्धः जातः । सः इन्द्रसमीपं गत्वा अवदत् - ''भवान् मम आहारम् अपहृत्य मम अपमाननं कृतवान् । मम शक्तिं जानन् अपि भवान् एतत् दुस्साहसं कर्तुम् उद्युक्तः अस्ति । मम अनुमतिं विना सुमुखः दीर्घायुष्मान् कृतः भवता । एषः अक्षम्य अपराधः । अतः अहं भवन्तं दण्डयिष्यामि एव'' इति ।

गरुडस्य एतां गर्वोक्तिं श्रुत्वा असन्तुष्टः विष्णुः - ''मम उपस्थितौ एव एतादृशं गर्ववचनं वदतः भवतः कियत् धाष्टर्यम् ? भवता मम वाहनत्वं प्राप्तं यत् तदेव एतस्य गर्वस्य कारणं स्यात् । किन्तु मां वोढुं

सामर्थ्यं भवतः यदि स्यात् तर्हि क्षणकालं मम वामहस्तस्य भारं वहतु तावत्'' इति उक्त्वा स्वस्य वामहस्तं गरुडस्य पृष्ठभागे स्थापितवान् । किन्तु गरुडः तं भारं वोढुं सर्वथा असमर्थः सन् भूमौ पतितवान् । गरुडस्य अहङ्कारः भग्नः । सः विष्णुं नमस्कृत्य क्षमायाचनं कृत्वा प्राणदानकृपां प्रार्थितवान् ।



एवं गरुडगर्वभङ्गकथां दुर्योधनं श्रावयित्वा कण्वः उक्तवान् - ''दुर्योधन ! पाण्डवैः सह युद्धं यदि क्रियते तर्हि भवतः अपि गतिः गरुडस्य इव एव भवेत् । अद्य भवतः रक्षणार्थं श्रीकृष्णः स्वयं भवद्द्वारदेशे उपस्थितः अस्ति । अतः तस्य वचनम् अङ्गीकृत्य स्वस्य कुलस्य च सर्वनाशं निवारयतु कृपया'' इति ।

दुर्योधनः उपहासमिश्रितहासं दर्शयन् कर्णं दृष्ट्वा कण्वं पुनः अवदत् - ''किं करणीयं, किं न करणीयम् इति अहं सम्यक् जानामि । तद्विषये कस्यापि उपदेशस्य आवश्यकता नास्ति मम'' इति ।

एतदनन्तरं नारदः दुर्योधनम् उक्तवान् - ''दुर्योधन ! अनुक्तग्राहितां परित्यज्य ज्येष्ठानां वचनं श्रृणोतु कृपया । पूर्वं गालवः नाम कश्चन विश्वामित्रशिष्यः आसीत् । सः अपि भवान् इव अनुक्तग्राही एव आसीत् । तस्य कथां श्रावयामि -

गालवः विद्याभ्यासानन्तरं गुरवे गुरुदक्षिणां दातुम् इष्टवान् । किन्तु विश्वामित्रः गुरुदक्षिणास्वीकारं निराकृतवान् । 'मया गुरुदक्षिणा दातव्या एव' इति गालवः पुनः पुनः उक्तवान् ।

तदा अप्रसन्नः विश्वामित्रः - ''यदि गुरुदक्षिणा दातव्या एव इति भवान् चिन्तयति तर्हि अष्टशतं श्वेताश्वान् आनीय ददातु । तेषां सर्वेषाम् एकः कर्णः कृष्णवर्णीयः स्यात्'' इति उक्तवान् ।

गालवः गुरोः एतादृशीं विलक्षणाम् अपेक्षां श्रुत्वा दिग्भ्रान्तः । तादृशाः अश्वाः कुत्र लभ्यन्ते इति न जानाति स्म सः । तान् क्रेतुं धनम् अपि न आसीत् तत्समीपे । अतः सः विष्णुं ध्यातवान् ।

अनन्तरक्षणे तस्य पुरतः गरुडः प्रत्यक्षः जातः । सः गालवम् अवदत् - ''भवतः साहाय्यार्थं भगवान् विष्णुः मां प्रेषितवान् अस्ति । गालवः यत्र वदति तत्र नेतव्यः इति



माम् आदिष्टवान् अपि अस्ति सः'' इति ।

सन्तुष्टः गालवः गरुडस्य पृष्ठभागे उपविश्य 'पूर्वस्यां दिशि गच्छतु तावत्' इति आदिष्टवान् । गरुडः वेगेन ततः प्रस्थितवान् ।

''एवं तीव्रवेगेन भवान् गच्छति चेत् मया किमपि स्पष्टतया न दृश्यते । अतः गमनं मन्दीकरोतु कृपया । मया विशिष्ट-लक्षणोपेताः अश्वाः अन्वेष्टव्याः सन्ति'' इति असूचयत् गालवः ।

गरुडः गालवस्य समस्यायाः परिहारार्थं मार्गम् एवं सूचितवान् - ''अश्वाः क्रयणात् एव प्राप्यन्ते । अश्वक्रयणार्थं भवते धनम् अत्यावश्यकम् । अतः यदि भवतः अनुज्ञा स्यात् तर्हि अहं भवन्तं प्रतिष्ठानपुराधीशस्य ययातेः समीपं नयेयम् । तं धनं प्रार्थयितुम् अर्हति भवान्'' इति ।

गालवः एतत् अङ्गीकृतवान् । ततः गरुडः तं ययातिसमीपं नीतवान् । ययातिः गालवस्य अपेक्षां श्रुत्वा अवदत् - ''मित्र ! इदानीं मम धनागारं रिक्तम् । अतः भवते धनं दातुं न शक्नोमि । किन्तु मम पुत्रीं माधवीं भवते दातुं शक्नोमि । तस्याः साहाय्येन भवान् अश्वान् प्राप्नोतु'' इति ।

गालवः माधव्याः स्वीकारं यदा अङ्गीकृतवान् तदा गरुडः - ''भवान् इदानीं माधव्याः साहाय्येन अश्वान् प्राप्तुं प्रयत्नं कर्तुम् अर्हति खलु ? अतः अहं प्रतिगच्छामि'' इति उक्तवान् । गालवस्य अनुज्ञां प्राप्य प्रतिगतवान् च ।

गालवः माधव्या सह अयोध्याधिपतेः समीपं गतवान् । अयोध्याधिपतिः गालवस्य कथां श्रुत्वा - ''एषा माधवी मम अन्तःपुरे भवति चेत् प्रतिफलरूपेण अहं भवते सहस्रं अश्वान् दद्याम् । किन्तु भवत्सूचित-लक्षणोपेताः अश्वाः मत्सकाशे द्विशत-सङ्ख्याकाः एव सन्ति । तान् नेतुम् अर्हति भवान्'' इति अकथयत् ।

माधव्याम् एकं पुत्रं प्राप्य आयोध्याधिपतिः तां गालवाय प्रत्यर्पित-वान् । एतदनन्तरं काशीनरेशस्य दिवोदासस्य समीपं गतवान् गालवः । काशीनरेशस्य समीपे अपि कृष्णकर्णयुक्ताः श्वेताश्वाः द्विशतसङ्ख्याकाः एव आसन् ।

दिवोदासः माधवीं प्राप्य तान् द्विशतम् अश्वान् गालवाय दत्तवान् । एकं पुत्रं प्राप्य

सः अपि माधवीं प्रत्यर्पितवान् ।

एवम् एव भोजनगरस्य राज्ञे उशीनराय अपि माधवीं दत्त्वा द्विशतम् अश्वान् प्राप्तवान् गालवः । एतावता तेन षट्शतम् अश्वाः सम्पादिताः आसन् । पुनः द्विशतम् अश्वाः कथं प्राप्तव्याः इति न ज्ञातवान् गालवः ।

अत्रान्तरे गरुडः पुनः मिलितः । ''पुनरपि द्विशतम् अश्वाः भवता प्राप्तुं न शक्याः । यतः तादृशाः अश्वाः लोके अन्ये न सन्ति एव । अतः एतावता प्राप्तान् षट्शतम् अश्वान् माधवीं च विश्वामित्राय अर्पयतु'' इति सूचितवान् सः । गालवः तथैव कृतवान् ।



एवं गालवकथां दुर्योधनं श्रावयित्वा अवदत् नारदः - ''महान्तं परिश्रमं कृत्वा अपि गालवः अन्ततो गत्वा पराजयम् अङ्गीकृतवान् । भवता अपि तथैव करणीयं भवेत् । अतः हितैषिणां वचनस्य पालनम् एव एतदवसरे श्रेयसे'' इति ।

कस्यापि उपदेशस्य प्रभावः यदा दुर्योधने न अभवत् तदा धृतराष्ट्रः श्रीकृष्णम् अवदत् - ''कृष्ण ! यत् प्रवर्तमानम् अस्ति तत् मम सम्मतं सर्वथा न। किन्तु पराधीनः अहं किं वा करवाणि ? दुर्योधनस्य विवेकबोधनं मया न शक्यते । भवान् एव पुनरपि प्रयत्नं करोतु'' इति ।

तदा श्रीकृष्णः दुर्योधनं सम्बोधयन् अवदत् - ''भवादृशेन जनेन तादृशः व्यवहारः न करणीयः, यश्च दुष्टैः जनैः क्रियते । किम् उचितं, किम् अनुचितम् इति भवान् जानाति एव । पाण्डवानां पराक्रमः भवता अनवगतः तु सर्वथा न । तैः सह सन्तोषेण भवतां वासः सर्वेषां प्रियः स्यात्'' इति ।

भीष्मः द्रोणः चापि श्रीकृष्णस्य कथनं समर्थितवन्तौ ।

विदुरः अपि दुर्योधनम् अवदत् - ''अहं भवतः विषये अधिकचिन्तनं न करोमि । भवतः मातापित्रोः गान्धारी-धृतराष्ट्रयोः हितविषये मम विशेषास्था । भवते जन्म दत्तवन्तौ तौ इदानीम् अनाथौ जातौ'' इति ।

धृतराष्ट्रः दुर्योधनं हितं बोधयितुं पुनः एकवारं प्रयत्नम् अकरोत् - ''कृष्णस्य मैत्री सर्वविधदृष्ट्या अपि अस्माकं हिताय एव ।



एतादृशस्य अवसरस्य त्यागः विवेकिनां लक्षणं न'' इति ।

दुर्योधनः कस्यापि हितवचनम् अङ्गीकर्तुं सिद्धः न आसीत् । सः कृष्णं सम्बोधयन् अवदत् - ''कृष्ण ! सर्वे मयि एव दोषम् आरोपयन्तः सन्ति । भवान् अपि पाण्डवानां पक्षम् एव समर्थयति । तेषां प्रतिनिधित्वेन एव भवान् अत्र उपस्थितः अस्ति अपि । सर्वे माम् एव दोषकर्तारं वदन्ति खलु ? मया तादृशः को वा दोषः कृतः ? पाण्डवाः स्वेच्छया एव द्यूते प्रवृत्ताः । अस्मान् विरुध्य किमर्थं युद्धसन्नाहं कुर्वन्तः सन्ति ते ? यदा शत्रुः युद्धसन्नाहं करोति तदा को वा क्षत्रियः मौनम् उपविशेत् ? अहं देवेन्द्रात् अपि भीतः न भवामि । एवं स्थिते मानवराजेभ्यः कुतो वा भीतः भवेयम् ? यदा अहं राजनीतिज्ञः न आसं तदा पाण्डवेभ्यः राज्यं दत्तम् आसीत् । अनन्तरकाले ते स्वस्य अविवेकेन एव तत् मह्यम् अर्पितवन्तः । यावत् अहं जीवामि तावत् अर्धराज्यं किं, सूच्यग्रमितां भूमिम् अपि पाण्डवेभ्यः न दास्यामि । अतः एतद्विषये इतःपरं चर्चा उपदेशः वा मास्तु सर्वथा'' इति ।

श्रीकृष्णः अन्तिमतया जागरूकतावचनं वदन् अवदत् - ''यः स्वस्य मृत्युं स्वयम् आलिङ्गितुं प्रवर्तते तं को वा निवारयेत् ? पाण्डवानां विषये भवता यद्यत् अन्याय्यं कृतं तत्सर्वं लोकविदितम् एव । भवता कृतानि कुतन्त्राणि अपि अनल्पानि । एवं स्थिते अपि भवान् वदति - मया किमपि पापं न कृतम् एव इति । भवतः हितार्थम् उच्यमानं किमपि न रोचते भवते । अग्रे समग्रं राज्यम् एव ते भवत्तः यदा बलात् वशीकरिष्यन्ति तदा भवता विवेकः प्राप्येत'' इति ।

एतत् श्रुत्वा नितरां क्रुद्धः दुर्योधनः आसनात् उत्थाय सभातः निर्गतवान् । तत्पक्षसमर्थकाः राजानः तम् अनुसृतवन्तः ।

तदा श्रीकृष्णः धृतराष्ट्रम् उक्तवान् - ''महाराज ! यदि सर्वनाशः निवारणीयः तर्हि दुर्योधनं तदनुयायिनः च बद्ध्वा पाण्डवाधीनान् करोतु । सन्धिप्रस्तावं च उपस्थापयतु'' इति ।

श्रीकृष्णस्य एतत् वचनं श्रुत्वा भीतः धृतराष्ट्रः गान्धारीद्वारा दुर्योधनाय वार्तां प्रेषितवान् यत् सन्धिप्रस्तावः अङ्गीकरणीयः

इति । किन्तु दुर्योधनस्य निर्णये किमपि परिवर्तनं न जातम् ।

'दुर्योधनं तत्पक्षसमर्थकान् च बद्ध्वा पाण्डवाधीनान् करोतु इति धृतराष्ट्रं सूचितवान् अस्ति श्रीकृष्णः' इति वार्ता यदा ज्ञाता तदा दुश्शासनः दुर्योधनम् अवदत् - ''अग्रज ! वयम् एव कुतः कृष्णं न बध्नीयाम ? कृष्णः बद्धः चेत् पाण्डवाः दन्तरहिताः सर्पाः इव शक्तिहीनाः स्युः एव'' इति ।

सात्यकिः दुर्योधनादीनाम् एतत् कुतन्त्रं ज्ञातवान् । राजसभां प्रविश्य सः कृष्णं विषयं निवेदितवान् । धृतराष्ट्रः सर्वे सभासदः चापि निवेदिताः तेन ।

तदा धृतराष्ट्रः झटिति वार्तां सम्प्रेष्य दुर्योधनं राजसभां प्रति आनायितवान् । तेन अकृत्यं यत् चिन्तितं तदर्थं तं सम्यक् भर्त्सितवान् च । विदुरः अपि पूर्णायां तस्यां सभायां दुर्योधनं भर्त्सितवान् ।

तदा श्रीकृष्णः दुर्योधनम् उद्दिश्य अवदत् - ''भोः, किं माम् एकाकिनं भावयति भवान् ? अहं कदापि न एकाकी । मयि एव प्रपञ्चस्य समग्रा सेनाशक्तिः, निहिता अस्ति । तावदेव न, अन्धकवृष्ण्यादयः योद्धारः, पाण्डवाः, सूर्यचन्द्रादयः, इन्द्र-रुद्रादयः, तपस्विनः चापि मयि एव सन्ति'' इति ।

अपरक्षणे जनेषु पश्यत्सु एव कृष्णस्य हृदयभागतः तेजोमय्यः अग्निज्वालाः निर्गताः । तस्य ललाटे बुधः, बाहौ एकादशरुद्राः, भुजयोः दिक्पालकाः, मुखे अग्निः च सर्वैः दृष्टाः ।

एतत् अपूर्वं दृश्यं दृष्ट्वा सर्वे दिग्भ्रान्ताः । अग्रे किमपि द्रष्टुम् अशक्नुवन्तः ते नेत्रे निमीलितवन्तः । श्रीकृष्णः द्रोणाय, भीष्माय, विदुराय, सञ्जयाय च दिव्यदृष्टिम् अनुगृहीतवान् । तेन ते कृष्णस्य विश्वरूपं द्रष्टुं शक्तवन्तः ।

किङ्कर्तव्यतामूढः धृतराष्ट्रः वस्तुस्थितिं ज्ञातुम् अशक्नुवन् अपृच्छत् - ''किम् एतत् प्रवर्तते अत्र ?'' इति । श्रीकृष्णः धृतराष्ट्रम् अपि दिव्यदृष्टिदानेन अनुगृहीतवान् ।





# काष्ठमयः खड्गः

प्रतापः कस्यचित् धनिकस्य गृहे कार्यं करोति स्म । प्रतापविषये धनिकस्य विशेषसन्तोषः आसीत् । कष्टकाले प्रतापः यं परिहारोपायं सूचयति स्म सः नितराम् उपकारकः भवति स्म । अतः एव प्रतापे विशेषप्रीतिः धनिकस्य ।

धनिकस्य गृहे कार्यकरणं प्रतापस्य पितामह्यै न रोचते स्म । सा वदति स्म - ''धनिकगृहीयं कार्यं न स्थिरम् । राजास्थाने यदि भवान् कमपि उद्योगं प्राप्तुं शक्नुयात् तर्हि भवतः जीवनं सुखमयं भवेत् । यावत् धनिकः सन्तुष्टः भवति तावत् धनिकगृहीयः उद्योगः युज्यते । यदा असन्तोषः भवेत् तदा धनिकः भवन्तम् उद्योगात् च्यावयेत् । राजास्थानस्य उद्योगः न तथा । अतः राजास्थानस्य उद्योगस्य प्राप्त्यर्थं भवता प्रयासः करणीयः'' इति ।

एतत् युक्तं भावयन् प्रतापः एकदा उद्योग-प्रार्थनार्थं राजधानीं गतवान् । स तु दृढकायः आसीत् । अतः राजा राजभवनस्य रक्षणकार्ये तं नियोजितवान् ।

रक्षकभटाः कार्यं सम्यक् कुर्वन्ति वा न वा इति राजा तदा तदा स्वयं परीक्षते स्म । एवं कदाचित् यदा सः परीक्षितवान् तदा प्रतापः निद्रामग्नः आसीत् । राजा तं न उत्थापितवान्, प्रत्युत तस्य कोषात् खड्गं स्वीकृत्य ततः निर्गतवान् ।

यदा प्रतापः जागरितः तदा तेन खड्गस्य अदर्शनं ज्ञातम् । एतस्मात् सः नितरां भीतः । रक्षकभटस्य खड्गः यदि न दृश्यते तर्हि सः अक्षम्यः अपराधः इति सः जानाति स्म । प्रतिदिनं प्रातः आयुधागारे खड्गः प्रदर्शनीयः भवति स्म ।. ततः पूर्वं राजा अपि प्रतिदिनम् एकैकम् अपि रक्षकभटं परीक्षते स्म ।

'प्रातःकालाभ्यन्तरे मया कोऽपि खड्गः न सम्पादितः चेत् मम उद्योगात् निष्कासनं दण्डनं च भविष्यति' इति चिन्तयन् प्रतापः स्वमित्रं तक्षकं स्मृतवान् । राजभवनात् अनतिदूरे एव तस्य गृहम् आसीत् । प्रतापः वेगेन तस्य गृहं गत्वा तम् उत्थाप्य स्वकष्टं निवेदितवान् । सर्वं श्रुत्वा तक्षकमित्रम् अवदत् - ''अहं तु भवते एकं काष्ठमयं खड्गं दद्याम् । किन्तु तादृशः खड्गः भवतः मानं कियत्कालं रक्षेत् ? एतादृशे प्रसङ्गे राज्ञः कृपा एव

*'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'*

प्राणरक्षिका स्यात्'' इति ।

ततः सः एकं काष्ठमयं खड्गं सज्जीकृत्य प्रतापाय दत्तवान् । तं कोषे स्थापितवान् प्रतापः । बाह्यदर्शनात् तु सः खड्गः लोहमयः इव एव दृश्यते स्म ।

'सद्यः तु अहं रक्षितः' इति चिन्तयन् प्रतापः अनन्तरदिने प्रातः राजनिरीक्षणावधौ सैनिकानां पङ्क्तौ स्थितवान् ।

प्रतिदिनं राजा निरीक्षणार्थम् एकाकी एव आगच्छति स्म । किन्तु तस्मिन् दिने कैश्चित् भटैः रक्ष्यमाणः कश्चन कारागारवासी अपि आत्मना सह आनीतः आसीत् तेन ।

राजा तं कारागारवासिनं दर्शयन् अवदत् - ''एषः महाद्रोही । मया सूच्यमानः कश्चित् भटः अद्य एतस्य शिरसः छेदं कुर्यात्'' इति ।

एतावत् उक्त्वा राजा सर्वान् भटान् सकृत् वीक्षितवान् । प्रतापे पतिता तदीया दृष्टिः तत्रैव लग्ना अभवत् ।

''भवान् एकेनैव प्रहारेण एतस्य शिरः शरीरात् पृथक् कुर्यात्'' इति प्रतापम् उद्दिश्य आज्ञां कृतवान् राजा ।

एताम् आज्ञां श्रुतवतः प्रतापस्य हृदयं स्तब्धम् इव ।

'यदि अहं शिरच्छेदं निराकरोमि तर्हि राजा न परित्यजेत् । मां दण्डयेत् सः । यदि अङ्गीकरोमि तर्हि मम खड्गापहरणवार्ता राज्ञा ज्ञायते । तदा अपि राजा मां दण्डयेत् । एवम् अद्य दण्डनप्राप्तिः मम सुनिश्चिता' इति चिन्तयन् प्रतापः क्षणकालं मौनं स्थितवान् ।

अन्ते 'उपायेन परिस्थितिः सम्मुखीकरणीया' इति निश्चित्य सः आत्मनि धैर्यं प्रपूर्य राजानम् अवदत् - '' महाप्रभो ! आयुधसहितान् दश अपि जनान् क्षणाभ्यन्तरे यमसदनं प्रेषयेयम् । किन्तु निरायुधस्य संहारः सर्वथा न शक्यते मया । अतः एतस्मिन्





दुष्टः जनः स्वयं शक्तिहीनोऽपि परपीडने अन्येषां साहाय्यं करोति एव । शिलाखण्डः स्वयं कस्यापि छेदने असमर्थोऽपि खड्गधारायाः तैक्ष्ण्यसम्पादने तु नितराम् उपकरोति । - *सुभाषितरत्नभाण्डागारम्*

कार्ये अन्यः नियोजनीयः इति मम प्रार्थना'' इति ।

तदा राजा कोपमिश्रितस्वरेण - ''किं ममैव आज्ञां तिरस्कर्तुम् इच्छति भवान् ? राजाज्ञायाः तिरस्कर्ता मरणदण्डनम् अर्हति । अतः अहं यदि अन्यं नियोजयेयं तर्हि सः आदौ भवतः शिरः छित्त्वा अनन्तरकाले एव एतस्य शिरः कर्तयेत्'' इति अवदत् ।

एतत् श्रुत्वा अपि प्रतापः न भीतः । सः नेत्रे निमील्य हस्तौ उन्नीय - ''अम्ब ! भवानि ! मां रक्षतु । यदि अहं भवत्याः भक्तः स्यां तर्हि मम एतं खड्गं काष्ठमयं करोतु । निरायुध- मारणरूपात् पापात् एतस्मात् मां निवारयतु च'' इति उच्चस्वरेण उक्त्वा कोषतः खड्गम् आकृष्टवान् । तस्य हस्ते आसीत् काष्ठमयः खड्गः !

एतत् दृष्ट्वा सर्वे रक्षकभटाः आश्चर्यचकिताः । 'कथम् एतस्य खड्गः काष्ठमयः जातः ? किम् एषः दैवचमत्कारः एव ?' इति चिन्तितवन्तः ते ।

राजा प्रतापस्य बुद्धिमत्तां दृष्ट्वा उच्चैः हसितवान् । अनन्तरं सः प्रतापम् उद्दिश्य - ''यद्यपि भवान् कार्ये अनवधानतां प्रदर्श्य दण्डनार्हतां सम्पादितवान् अस्ति, तथापि इदानीम् उपायचतुरतां प्रदर्श्य मम प्रीतिपात्रताम् अपि गतः अस्ति । अतः अद्य मया क्षमा प्रदर्श्यते । भवन्तं च अङ्गरक्षकगणे नियोजयिष्यामि । इतः परम् एतादृशः प्रमादः यथा न भवेत् तथा जागरूकता भवतु'' इति उक्तवान् ।

'काष्ठमयः खड्गः मम प्राणान् अरक्षत्' इति चिन्तयन् प्रतापः तृप्त्या निश्श्वसितवान् ।

पौत्रस्य अङ्गरक्षकोद्योगप्राप्तिं श्रुत्वा पितामही महान्तं सन्तोषं प्राप्तवती ।





# वास्तविकता-स्वप्नयोः भेदः

श्यामः कृष्णः भीमः च एकस्यैव ग्रामस्य वासिनः युवकाः । तेषां त्रयाणां समस्या अपि समाना ।

श्यामः गौरीनामिकां तरुणीं परिणेतुम् इच्छति । किन्तु निर्धनकुले जाताय तस्मै स्वपुत्रीं दातुं न इच्छतः स्म गौर्याः मातापितरौ ।

कृष्णः बुद्धिमान् सुन्दरश्च । सः धनिकस्य गजपतेः पुत्रीं स्वातिं परिणेतुम् इच्छति स्म । स्वातिः अपि कृष्णे अनुरागवती आसीत् एव । किन्तु गजपतिः दृढस्वरेण उक्तवान् आसीत् - ''यः प्रतिदिनं शतं रजतनाणकानि वा सम्पादयेत् तस्मै एव मम पुत्री दीयते, न अन्यस्मै'' इति ।

भीमः कमलायाम् अनुरक्तः आसीत् । कमला अपि भीमम् इच्छति स्म । किन्तु कमलायाः मातापितरौ इच्छतः स्म यत् विवाहानन्तरं वरः स्वगृहं परित्यज्य अस्मद्गृहे एव निवसेत् इति । भीमस्य मातापितरौ वृद्धौ । भीमात् ऋते अन्यः आश्रयः न आसीत् तयोः । अतः मातापितरौ परित्यक्तुं न इच्छति स्म भीमः ।

एकदा ते त्रयः अपि एकत्र मिलितवन्तः । त्रयः अपि स्वकथाम् अन्यौ उक्तवन्तः । ततः परिस्थितिविषये तेषां मध्ये चर्चा प्रवृत्ता । अन्ते ते निर्णीतवन्तः - ''धनाभावः एव अस्माकं त्रयाणाम् अपि समस्यायाः मूल-कारणम् । अस्मत्-समस्यापरिहारार्थं प्रभूतं धनम् आवश्यकम् एव । तावत् धनं सम्पादयितुम् अस्माकं सामर्थ्यं कस्यापि नास्ति । अतः इदानीम् आत्महत्या एव शरणम् अस्माकम्'' इति ।

तदनुगुणं ते एकस्यां रात्रौ ग्रामसीमायां स्थितस्य पर्वतस्य शिखरस्य अग्रभागे स्थित्वा पतनार्थं सिद्धाः सन्तः नेत्रे निमील्य भगवन्तं प्रार्थितवन्तः - ''भगवन् ! अग्रिमजन्मनि वा

सुभद्रा



अस्मान् त्रीन् अपि महाधनिकान् करोतु'' इति ।

प्रार्थनां समाप्य यावत् ते पतनार्थम् उद्युक्ताः तावता पृष्ठभागतः कश्चन गम्भीरः कण्ठध्वनिः श्रुतः - ''अलम् अविवेकेन । निवार्यतां पतनप्रयत्नः । अन्यथा घोरः परिणामः प्राप्येत'' इति ।

ते मुखं परिवृत्य पृष्ठतः दृष्टवन्तः । तत्र कश्चन महात्मा स्थितः आसीत् । सः तान् अवदत् - ''भगवता दत्तम् अमूल्यं वरम् एव जीवनं नाम । आत्महत्यया तस्य समापनं पापाय । समस्यातः भीतिं प्राप्य आत्महत्यार्थं प्रयत्नः क्रियते चेत् समस्यायाः परिहारः तु न भवति, प्रत्युत समस्यायाः जटिलता वर्धिष्यते । आत्महत्यया मरणं प्राप्तं चेत् नरकं प्राप्यते । नरकवासः कष्टाय । ततः नीचगतिः प्राप्यते । जीवनस्य समस्यायाः परिहारः जीवने एव प्राप्तव्यः, न तु मरणतः'' इति ।

महात्मनः वचनं श्रुत्वा ते आदौ क्षणकालं दिग्भ्रान्ताः । अनन्तरं विवेकं प्राप्य ते चिन्तितवन्तः - 'महतः पापात् एषः महात्मा अस्मान् रक्षितवान्' इति । अतः ते आत्महत्याविचारं परित्यक्तवन्तः ।

किन्तु जीवने अपि विशेषेच्छा तेषां न आसीत् । अतः ते विनयेन नमस्कृत्य महात्मानम् उक्तवन्तः - ''महात्मन् ! अस्मान् भवान् मरणात् निवारितवान् । किन्तु जीवने आसक्तिः नास्ति अस्माकम् । अतः अग्रे किं करणीयम् इति भवता एव निर्देष्टव्याः वयम्'' इति ।

''एकया दृष्ट्या भवतां जीवनं समाप्तम् अस्ति । अतः अवशिष्टस्य जीवनस्य विषये भवतां नास्ति अधिकारः । भगवता एव भवन्तः रक्षिताः । अतः शेषजीवनं भगवत्कार्यार्थं समर्पयन्तु भवन्तः । स्वसमस्यां भगवते समर्प्य गृहं प्रतिगच्छन्तु भवन्तः । तेन सर्वं मङ्गलमयं भविष्यति'' इति उक्त्वा सः महात्मा क्षणाभ्यन्तरे ततः अदृश्यः अभवत् ।

ते त्रयः ततः निर्गत्य कञ्चित् मार्गम् अनुसृतवन्तः । मध्येमार्गं कश्चन दृढकायः श्मश्रुलः दृष्टः । सः एतेषां कथां श्रुत्वा अट्टहासं प्रदर्श्य - ''आगच्छन्तु मया सह । जीवनस्य नूतनं मार्गम् अहं दर्शयिष्यामि । ततः धनं, प्रसिद्धिः, कीर्तिः इत्यादिषु भवन्तः

यद्यत् इच्छन्ति तत्सर्वं प्राप्तुम् अर्हन्ति'' इति अवदत् ।

ते त्रयः तम् अनुसृतवन्तः । तान् स्वगृहं नीत्वा सः पातुं किमपि पेयं दत्तवान् । तस्य पानात् ते त्रयः अपि अचेतनतां प्राप्य निद्रावशं गताः ।

अचेतनावस्थायां श्यामः एकं स्वप्नं दृष्टवान् । स्वप्ने सः राजकुमारत्वं प्राप्य गौरीं परिणीतवान् आसीत् । सुखमयं जीवनं तेन प्राप्तम् आसीत् ।

कृष्णेन अपि स्वप्नः दृष्टः । तत्र सः गजपतेः पुत्रीं परिणीय श्वशुरगृहे एव वासम् आरब्धवान् । श्वशुरगृहस्य स्वामी एव जातः सः ।

भीमेनापि स्वप्नः दृष्टः । तत्र कमला मातापित्रोः विरोधम् अपि अपरिगणय्य तं परिणीतवती । पुत्री इव श्वश्रू-श्वशुरयोः सेवाम् आरब्धवती च ।

सचेतनताप्राप्तेः अनन्तरं त्रयाणाम् अपि मुखे प्रसन्नता दृश्यते स्म । स्वप्ने यत् दृष्टं तत् वास्तविकजीवने एव प्रवृत्तम् इति भावितवन्तः ते । स्वप्नवृत्तान्तं परस्परम् उक्तवन्तः ते ।

श्मश्रुलः तान् उक्तवान् - ''अहं भवद्भ्यः मादकम् औषधं मेलयित्वा जलं दत्तवान् आसम् । तस्य प्रभावतः भवन्तः स्वप्नं दृष्टवन्तः । तत् मादकौषधं पुष्पेभ्यः निर्मीयते । एतानि पुष्पाणि मम वाटिकायां वर्धन्ते । वाटिकायां कार्यं कर्तुं समर्थाः जनाः अपेक्ष्यन्ते । अहं भवद्भ्यः प्रतिमासम् उत्तमं वेतनं दास्यामि । प्रतिदिनम् एतादृशम्



औषधम् अपि पातुं दास्यामि । भवन्तः अत्रैव वसन्तः वाटिकायां कार्यं कुर्वन्तु'' इति ।

एषः प्रस्तावः तेभ्यः अरोचत । अतः ते वाटिकायां कार्यम् अङ्गीकृतवन्तः । श्मश्रुलः तान् वाटिकां नीतवान् ।

वाटिकां प्रति गमनसमये कश्चन सर्पः कृष्णम् अदशत् । एतत् दृष्ट्वा सः श्मश्रुलः अवदत् - ''अनतिदूरे कश्चन महात्मा निवसति । तत्समीपम् एषः नेतव्यः । सः एकः एव एतस्य चिकित्सां कर्तुं समर्थः'' इति ।

श्यामः भीमः च कृष्णं महात्मनः आश्रमं प्रति नेतुम् उद्युक्तौ जातौ । एवं नयनसमये एव कृष्णः मध्येमार्गं मूर्च्छां गतः । ततः नितरां भीतौ तौ वेगेन पदं स्थापयन्तौ आश्रमं




प्राप्तवन्तौ ।

आश्रमे सः एव महात्मा आसीत् यश्च तान् आत्महत्यातः निवारितवान् आसीत् । तं दृष्ट्वा श्यामः भीमः च आश्चर्यचकितौ । सः महात्मा मन्त्रप्रयोगेण सर्पविषं निवार्य कृष्णम् उज्जीवितवान् । अनन्तरं सः तान् पृष्टवान् - ''बालाः, स्वगृहं गच्छन्तु इति मया सूचितम् आसीत् खलु ? किन्तु भवन्तः किमर्थम् अत्र आगताः ? किं भवन्तः पुनरपि मार्गभ्रष्टाः ?'' इति ।

ते प्रवृत्तं सर्वं निवेदितवन्तः विस्तरेण । सर्वं श्रुत्वा महात्मा पृष्टवान् - ''भवन्तः इदानीं नितरां बुभुक्षिताः स्युः खलु ? किं खादितुम् इच्छन्ति भवन्तः ? तद् नितरां दुर्लभं चेदपि अलं चिन्तया । तस्य नाम कथयन्तु'' इति ।

ते स्वस्य इष्टतमानि खाद्यानि उक्तवन्तः । ततः महात्मा अङ्गुल्या एकैकशः तेषां शिरः स्पृष्टवान् । अङ्गुलीस्पर्शतः ते स्वप्नावस्थां प्राप्तवन्तः । स्वप्ने ते अपेक्षितानि विविध-खाद्यानि बहुधा खादितवन्तः । स्वप्न-खादनानन्तरं तेषां जागरणं जातम् ।

जागरितेभ्यः तेभ्यः एकं कदलीफलम्, एकं बीजपूरफलं च दत्त्वा संन्यासी उक्तवान् - ''एतानि खादित्वा बुभुक्षां निवारयन्तु भवन्तः । एतदतिरिच्य इदानीं दातुं किमपि नास्ति मत्समीपे'' इति ।

ते फलानि खादितवन्तः । अनन्तरं महात्मा पृष्टवान् - ''वास्तविकी तृप्तिः वास्तविकतया यत् लब्धं तस्य खादनतः प्राप्ता, उत स्वप्ने अभीष्टानां खाद्यानां खादनतः लब्धा ?'' इति ।

वास्तविकखादनतः बुभुक्षा शान्ता जाता आसीत् । स्वप्नखादनतः च तृष्णा उद्बुद्धा आसीत् । एतत् अवगच्छन् श्यामः उक्तवान् - ''महात्मन् ! सामान्यफलानां खादनतः एव बुभुक्षा शान्ता । तृप्तिश्च लब्धा । स्वप्ने अभीष्टानि फलानि दृष्टानि, किन्तु ततः बुभुक्षा न शान्ता, तृप्तिः अपि न प्राप्ता'' इति ।

''आवयोः अपि अयम् एव अनुभवः महात्मन्'' इति विनयेन उक्तवन्तौ कृष्णः भीमः च ।

''मित्राणि ! जीवनम् अपि एतादृशम् एव ! सरलं जीवनं यद्यपि अनाकर्षकं स्यात्, तथापि तदेव तृप्तिं जनयति, सार्थक्यं

कल्पयति च । विविधानि अभीष्टानि यद्यपि रमणीयानि भवन्ति, किन्तु तानि प्रायः अलभ्यानि, स्वप्नलब्धफलानि इव वा । मृगमरीचिकायमाणानि तानि अस्मान् भ्रमगर्ते पातयन्ति । मृगतृष्णा यथा कस्यापि पिपासां शमयितुं सर्वथा न शक्नोति तद्वत् एव तानि अभीष्टानि अपि तृप्तिं जनयितुं न शक्नुवन्ति ।''

''जीवने निराशां प्राप्य आत्महत्यार्थं प्रयत्नः, अवास्तविकस्य मिथ्यानन्दस्य अनुसरणं च मार्गभ्रष्टतायाः एव अन्य-मुखायते । सः मादकपदार्थवणिक् भवतः सर्वान् भ्रमालोके पातयितुम् इच्छति स्म । भवन्तः नरकप्राप्तिभीत्या आत्महत्यातः निवृत्ताः । किन्तु अग्रे किं वा कृतम् ? भ्रमालोके पतितुम् उद्युक्तम् । सामान्यनरकात् दूरे गत्वा रौरवनरके पतितं भवद्भिः । किम् एतत् विवेकिनां लक्षणम् ?'' इति बोधितवान् सः महात्मा ।

इदानीं तेषु विवेकः उदितः । ते उक्तवन्तः - ''महात्मन् ! द्वितीयवारम् अपि भवान् अस्मान् मरणात् रक्षितवान् । वस्तुतः वयं मार्गभ्रष्टाः आस्म । सर्पात् आत्मानं संरक्ष्य व्याघ्रमुखं प्रवेष्टुम् उद्युक्ताः आस्म वयम् । भवान् इदानीम् अस्मासु विवेकं जागरितवान् । भगवान् यावत् ददाति तावता एव सन्तोष्टव्यम् । वास्तविकजीवने प्राप्यमाणः आनन्दः काल्पनिकजीवने दृष्टात् स्वर्गसुखात् अपि श्रेष्ठतरः । भगवतः अनुग्रहेण प्राप्तम् एतत् जीवनं भगवत्सेवायै एव विनियुज्यते अस्माभिः'' इति ।

''विवेकिनः एव एतादृशं निर्णयं कर्तुम् अर्हन्ति । भोः बालाः ! चिरं जीवन्तु भवन्तः । उत्तमजीवनयापने भगवान् निश्चयेन भवतां साहाय्यं करिष्यति'' इति उक्त्वा तान् आशिषा अनुगृहीतवान् महात्मा ।

ते त्रयः अपि महात्मनः अनुज्ञां प्राप्य स्वग्रामं प्रति प्रस्थितवन्तः । तेषां जीवने अन्धकारः उपगतः आसीत् । उषःकालः च उपस्थितः आसीत् ।



# चिन्त्यताम् ! अभिव्यज्यताम्

एतस्मिन् अङ्के प्रकाशितानां प्रश्नानाम् उत्तरम् अग्रिमाङ्के प्रकाशयिष्यते । ततः पूर्वं - **चन्दमामा (संस्कृतम्) भारतावगति-प्रश्नोत्तरम्, अक्षरम्, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५** इत्येतस्मै सङ्केताय उत्तरं प्रेषयितुम् अर्हन्ति भवन्तः । किन्तु एतस्यां प्रश्नोत्तरस्पर्धायां स्वस्य भागग्रहणार्थम् अधोनिर्दिष्टायाः सर्जनात्मककृतेः प्रेषणम् अनिवार्यम् ।

एतस्यां सञ्चिकायां प्रकाशितासु कथासु का भवते विशेषतः अरोचत, किमर्थं च अरोचत इति शतशब्दैः एकं पत्रं लेखनीयम् । अध्यापकस्य प्रेषकस्य वा हस्ताक्षरेण प्रमाणीकृत्य नाम, वयः, कक्ष्यां, विद्यालयनाम (यदि अधीयमानम् अस्ति तर्हि), पूर्णसङ्केतं च लिखित्वा उपर्युक्तसङ्केताय प्रेषयन्तु ।

प्रथमपारितोषिकं **रू. १००० - ००**
द्वितीयपारितोषिकं **रू. ५०० - ००**
प्रोत्साहकपारितोषिकाणि (पञ्च)
प्रतिजनं **रू. २०० - ००**



## भारतावगतिप्रश्नः - २

घोरान्धकारमयी वृष्टिमयी काचित् रात्रिः । वृष्ट्या आर्द्रः पङ्केन लिप्तः च कश्चन तरुणः नदीतटे स्थितस्य कस्यचित् गृहस्य पृष्ठद्वारं ताडितवान् । दीपं गृहीत्वा आगता तरुणी द्वारम् उद्घाट्य - "आर्यपुत्र ! अहो, भवान् ! एतस्मिन् घोररात्रिकले महापूरोपेतां नदीम् अतिक्रम्य कष्टपरम्पराम् ऊढ्वा एतत् मत्पितृगृहम् प्रति आगमनस्य का आवश्यकता आसीत् ?'' इति पृष्टवती ।

"भवतीं विना क्षणकालम् अपि जीवितुं न शक्नोमि'' इति उक्तवान् युवकः ।

"हन्त ! मद्विषये या प्रीतिः, तस्याः अर्धभागः यदि भगवतः विषये भवतः अभविष्यत् .....'' इति सविषादम् उक्तवती युवतिः ।

तस्मिन् एव क्षणे युवके महत् परिवर्तनं जातम् । तस्मिन् भगवद्भक्तिः उद्बुद्धा । अनन्तरकाले सः महापुरुषः संवृत्तः । एतस्यां घटनायां प्रस्तुतौ तौ कौ ?



चन्द

अधोलिखितानां पौराणिकयुगलानां परस्परसम्बन्धः कः ?



चन्दमामा - विविधभाषामयी

# !! पुरस्कारः प्राप्यताम् !!!

मामा



१. आयुर्विज्ञानीया प्रथमा भारतीयकृतिः का ? तस्याः रचयिता कः ? सः कदा आसीत् ?
२. शल्यचिकित्सासम्बन्धिनी प्रथमा भारतीयकृतिः का ? तस्याः रचयिता कः ? सः कदा आसीत् ?
३. इतिहाससम्बद्धः प्रथमः भारतीयग्रन्थः कः ? तस्य रचयिता कः ? सः कदा आसीत् ?
४. समाजशास्त्रं विधिशास्त्रं राजनीतिशास्त्रं च अधिकृत्य रचिता प्रथमा भारतीयकृतिः का ? तस्याः रचयिता कः ? तस्य कालः कः ?
५. नाट्यशास्त्रसम्बद्धा प्रथमा भारतीयकृतिः का ? तस्याः रचयिता कः ? तस्य कालश्च कः ?




**नियमाः -**

१. चन्दमामा इण्डिया लि., संस्थायाः उद्योगिनः, तेषां बान्धवाः, सहयोगिनः च एतस्यां स्पर्धायां भागग्रहणे अर्हाः न भवन्ति ।
२. निर्णायकानां निर्णयः एव अन्तिमः । एतद्विषये पत्रव्यवहारः न करणीयः ।
३. येषाम् अक्षराणि सुन्दराणि न भवन्ति, तेषाम् उत्तरं तिरस्क्रियते ।
४. परिणामः जून् - २००० सञ्चिकायां प्रकाशयिष्यते ।
५. उत्तराणि प्राप्तुम् अन्तिमदिनाङ्कः - ३० एप्रिल्, २०००

| | | |
|---|---|---|
| अ. अभिमन्युः | - | बलरामः |
| आ. उग्रसेनः | - | प्रद्युम्नः |
| इ. घटोत्कचः | - | शिशुपालः |
| ई. कीचकः | - | परीक्षित् |
| उ. कर्णः | - | सुभद्रा |

## - अभिन्नपरम्पराद्योतिका



# भारतम्

## पूर्वम् इदानीं च



# दक्षिणभारतीयं महानगरम्

तमिळुनाडुराज्यस्य राजधान्याः नाम 'चेन्नै' इति द्वित्रेभ्यः वर्षेभ्यः पूर्वं निश्चितं स्यात्, तथापि तत् नाम तु प्राचीनम् एव । चेन्नै पूर्वं मद्रास्पदेन दीर्घकालं यावत् निर्दिश्यते स्म ।

समुद्रतीरे स्थितस्य चन्नकेशवनामकस्य मन्दिरस्य कारणतः 'चेन्नै' इति नाम आगतं स्यात् । ईस्ट्-इण्डियासंस्थाजनाः दुर्गनिर्माणोद्देशेन तत् मन्दिरं नाशितवन्तः ।

'आंग्लाः स्ववसत्यर्थम् उपनिवेशान् निर्मातुं दण्डनायकात् दमराला वेङ्कटप्पात् भूमिं क्रीतवन्तः । वेङ्कटप्पः सूचितवान् यत् भवद्भिः निर्मीयमाणा वसतिः मम पितुः चेन्नप्पनायकस्य नाम्ना निर्देष्टव्या इति । चेन्नप्पनामसम्बन्धात् चेन्नैनाम आगतम्' इति वदति अपरा कथा ।



मद्रास्पदस्य सम्बन्धः कैः पदैः अस्ति इति स्पष्टतया न ज्ञायते । मुस्लिमशालायाः मदरसातः तत् सम्बद्धम्, उत मुस्लिम-नायकस्य मदरासनस्य नाम्ना, अथवा पोर्चुगलीयात् प्रसिद्धात् 'मदेरा'परिवारात् इति तु न स्पष्टम् अद्यावधि ।

चेन्नैनगरं दिल्ली-वाराणसी-काञ्चीप्रभृतीनि नगराणि इव अतिपुरातनं न चेदपि प्राचीनेतिहाससम्बन्धः तु तस्य अस्ति एव । द्विसहस्रवर्षेभ्यः पूर्वं तिरुवळ्ळुवरः नाम तमिळुमहाकविः अत्र मायलापुरनामके स्थाने निवसति स्म । सः 'तिरुक्कुरुल्'नामकं श्रेष्ठं तत्त्वग्रन्थं रचितवान्, यश्च पञ्चमवेदत्वेन परिगण्यते क्वचित् ।

तिरुवल्लुवरः कश्चनः उदात्तजीवी कविः । कदाचित् तस्य पत्नी कूपात् जलम् उद्धरन्ती



आसीत् । तदा पतिः ताम् आहूतवान् । सा जलोद्धारकार्यं तथैव परित्यज्य पतिसमीपं गतवती । कूपसमीपम् आगतः कश्चन यात्रिकः कूपे निराधारतया लम्बमानं घटं दृष्ट्वा आश्चर्येण स्तब्धः जातः ।

येसुक्रिस्तस्य साक्षाच्छिष्यः सेण्ट्थामसः, यश्च प्रथमे क्रिस्ताब्दे भारतम् आगतः आसीत्, चेन्नैनगरे कस्मिंश्चित् पर्वतप्रदेशे प्राणान् अत्यजत् । अतः स च पर्वतः सेण्ट्थामस्पर्वतनाम्ना निर्दिश्यते । तस्य स्मारकम् आदौ यत्र निर्मितम् आसीत् स च प्रदेशः 'सेन् थोम् केथडरल्'नाम्ना निर्दिष्यते ।

सप्तदशे शतके ईस्ट्-इण्डियासंस्था चेन्नैनगरं स्ववाणिज्यकेन्द्रम् अकरोत् । आदौ आंग्लेयाः समुद्रतीरे पर्णकुटीरेषु वसन्ति स्म । किन्तु गच्छता कालेन ते दुर्गं निर्माय भवनेषु वासम् आरब्धवन्तः ।

मायलापुरे स्थितं कपालेश्वरमन्दिरं, ट्रिप्लिकेनप्रदेशे स्थितं पार्थसारथिमन्दिरं च अत्र दर्शनयोग्यम् अस्ति । अडयार्प्रदेशे अन्ताराष्ट्रियायाः 'थियासोफिकल्सोसैटि'-नामिकायाः संस्थायाः मुख्यालयः अस्ति, यश्च अध्ययन-संशोधनादिनिमित्तं ख्यातम् अस्ति । ४० लक्ष-मितजनसङ्ख्यया युक्तस्य, समुद्र-तीरे स्थितस्य



चेन्नैनगरस्य विविधपार्श्वेषु दर्शनीयानि स्थलानि सन्ति बहूनि । चोलमण्डलनामके आधुनिकग्रामे प्रतिभावन्तः कलाकाराः एव वसन्ति । तेषां कृतीनां स्थिरप्रदर्शिनी व्यवस्थाप्यते तत्र । चेन्नैतः अनतिदूरे समुद्रतीरे महबलिपुरम् अस्ति, यच्च मूर्तिकलार्थम् अखण्डित-शिलास्मारकार्थं च ख्यातम् अस्ति ।

चेन्नैनगरे आधिक्येन उपयुज्यते तमिळु-भाषा । सा अतिप्राचीना समृद्धा च । एतया भाषया बहवः महानुभावाः अनेकान् अपूर्वान् ग्रन्थान् लिखितवन्तः दृश्यन्ते । अस्मिन् नगरे अन्यभाषाभाषिणः अपि वसन्ति एव । भारतस्य सर्वराज्यीयाः अपि अत्र सन्ति इति यदि वदेम तर्हि न हि सा अतिशयोक्तिः भवेत् । विविधभाषाभाषिणः परस्परसौहार्देन व्यवहरन्तः भारतीयत्वं स्मरन्तः सुखेन वसन्ति अत्र ।




# विश्वपुस्तकमेला

आधुनिके प्रपञ्चे वर्णमयघटनाः एव प्रचुराः । क्वचित् युद्धं प्रवर्तते । पुनः क्वचित् सेनानायकाः सर्वकारं स्वाधीनीकुर्वन्ति । अपहरणानि, अपघातादयः च नित्यविषयाः ।

किन्तु अस्माकं मासाः एतादृशीभिः आघातकरीभिः घटनाभिः एव उपेताः भवन्ति इति न । काश्चन उत्तमघटनाः अपि सम्भवन्ति तत्र । ताः समाजे सत्प्रभावं जनयन्ति । विना कोलाहलं बहूनां जीवने प्रभावम् उत्पादयन्ति ताः ।

तादृशी एका घटना प्रवृत्ता नवदेहल्याम् । सा च – विश्वपुस्तकमेला । एषा फेब्रवरीमासे पञ्चमदिनाङ्कतः सप्ताहं यावत् प्रवृत्ता -प्रगतिक्रीडाङ्गणे । प्रधानमन्त्री श्री अटलबिहारिवाजपेयिवर्यः तस्याः उद्घाटनं कृतवान् । मानवसम्पन्मूलविकासविभागस्य मन्त्री डा॰ मुरलीमनोहरजोशी उद्बोधनं कृतवान् ।

एतस्य शतकस्य प्रथमः एतादृशः महाकार्यक्रमः एषः । भारते प्रवृत्तं चतुर्दशं विश्वपुस्तकप्रदर्शनम् एतत् । प्रथमं विश्वपुस्तकप्रदर्शनं १९७२ तमे वर्षे प्रवृत्तं, यस्मिन् च २२४ विक्रेतृप्रकाशकादयः (भारतीयाः विदेशीयाः च) भागं गृहीतवन्तः आसन् । एतदवसरे तु १२०० संस्थाः भागं गृहीतवत्यः आसन् । २९,००० वर्गमीटरात्मके विशाले स्थले नवसु विक्रयणा-






ङ्गणेषु एषा प्रदर्शिनी प्रवृत्ता ।

एतद्वर्षीयमेलायाः वैशिष्ट्यं नाम बाल-साहित्यप्रदर्शनम् । भारतीयानि विदेशीयानि च बालसाहित्यपुस्तकानि पृथक्तया व्यवस्थिततया प्रदर्शितानि अत्र । एतत् दृष्ट्वा सहस्रशः बालाः, तत्पोषकाः च हर्षं रोमाञ्चं च प्राप्तवन्तः ।

'पुस्तकानां द्वारा ज्ञानम् आनन्दं च बालेषु उत्पादयितुं शक्यते' इति विश्वासं प्राप्तवन्तः पोषकाः ।

एतदवसरे अन्या अपि आसक्तिजनिका घटना प्रवृत्ता । बालकृतिभिः उपेता अतीदीर्घा वृत्तपत्रिका अत्र प्रदर्शिता । तस्यां विविध-देशीयैः बालैः लिखितानि गद्यानि, पद्यानि, कथाः, टुपूकविताः, चित्राणि, विनोदचित्राणि इत्यादीनि आसन् । भित्तिपत्रिकारूपेण प्रदर्शिता सा ।

राष्ट्रियपुस्तकालयस्य बालसाहित्य-विभागेन बालसाहित्यसमास्यादीन् अधिकृत्य एका चिन्तनगोष्ठी अपि आयोजिता आसीत् । सुप्रसिद्धाः लेखकाः, सम्पादकाः, प्रकाशकाः, चित्रकाराः इत्यादयः, देश-विदेशीयाः प्रतिनिधयः च तत्र भागं गृहीतवन्तः । एतस्याः चिन्तनगोष्ठ्याः उद्घाटनसमारोहे रस्किन्बाण्ड्वर्यः मुख्यातिथिः आसीत् । मनोजदासवर्यश्च अत्र उपोद्घातभाषणं कृतवान् । एतौ उभौ अपि चन्दमामायाः सम्पादनपरामर्शदातारौ इति भवन्तः जानन्ति एव खलु ?

आम्, भवतां प्रियपत्रिकायाः चन्दमामायाः अपि तत्र प्रदर्शनापणः आसीत् । द्वादशभाषामय्यः सञ्चिकाः तत्र प्रदर्शिताः । एवं बहुभाषावृत्तिमयत्वं प्रायः प्रकाशनक्षेत्रे अपूर्वम् । एषा अपूर्वता बहून् अतोषयत् ।

दूरदर्शनम्, इण्टर्नेट् इत्यादिषु आकर्षक-माध्यमेषु मानवानां पठनकालस्य भागम् अपहृतवत्सु अपि, अद्यापि ज्ञानसाधनत्वेन मनोविनोदजनकत्वेन च पुस्तकानां विशिष्टं स्थानं न अपगतम् । अतः पुस्तकानां जनप्रियता अक्षुण्णतया अनुवर्तते एव । 'प्राप्तस्य सहवासस्य अनुगुणं मानवः रूपितः भवति' इति अभियुक्तोक्तिः भवद्भिः श्रुतपूर्वा एव । अमेरिकीयेन केनचित् ग्रन्थकर्त्रा अल्प-परिवर्तनपूर्वकं सा उच्यते - 'यादृशेषु विषयेषु मानवः मनः विधत्ते तादृशः भवति सः' इति । उत्तमं पुस्तकम् एव उत्तमसहवासदातृत्वं निर्वोढुम् अर्हति ।





# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु-५६००८५





युक्ता शीर्षिका एप्रिल् - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्त्रतमवर्षस्य जून्-मासे प्रकाशयिष्यते ।

## अभिनन्दनानि



'फेब्रवरी'स्पर्धाशीर्षिकाप्रेषकः-

**श्री अरक्षित प्रुस्टी**

कथुवापतन, अलिपिङ्गल
जगसिङ्गपुरम् - ७५४ १०३
ओरिस्सा



प्रथमचित्रम् - **स्थूलशरीरः गजः सुशीलः ।**
द्वितीयचित्रम् - **कोमलकायः शिशुरतिचपलः ।**

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**
**भारते रू.१२० - ००**

---

Payment in favour of CHANDAMAMA INDIA LIMITED for details address you enquires to : Publication Division, Chandamama Buildings, Vadapalani, Chennai-600 026

